ही। समरम्मर मारी रुद्दखुद्दोवसग्गा। पलयमजिअसंती कित्तणेऊत्तिजं ती.। निविडतरतमोहा नक्खरा लंखिध्यव ॥१०॥ निचिअउरिअदारु द्दित्त ऊाणग्गिजाला। परिगय मिव गोरं चिंतिअं ऊाण रूवं। कणयनिहसरे हा कंतिचोरं करिज्जा। चरथिर मिह लच्छिं गाढसं थंभिध्यव ॥ ११ ॥ अडविनिवडिआणं पत्थिवुत्तासिआणं। जलहिखहरिहीरं ताणगुत्तिणियाणं। जलिअ जलणजाला लिंगिआणंचऊाणं। जणयइ लज्जसंतिं संतिनाहाजिआणं ॥ १२ ॥ हरिकरिपरिकिणं पक्कपाइक्कपुण्णं। सयलपुहवि रज्जं ठड्डिंअणसज्जं। तणमिव पडिलग्गं जेजिणामुत्तिमग्गं। चरण मणुपवणा ज्जं तुतेमे पसणा ॥ १३ ॥ ठणससिवयणाहिं। फुल्लनित्तुप्पलाहिं। थणन्नरन मिरीहिं मुठिगिज्झोदरीहिं। ललिअन्नुअलयाहिं पीणसोणित्थलीहिं। सय सुर रमणीहिं वंदिआ जेसि पाया ॥ १४ ॥ अरिस किडिन्नकुठ गंठि का साइसार। खयजर वणलूआ साससोसोदराणि। नहमुह दसणच्ठी कुच्छि कणाइरोगे। महजिण जुअपाया सुप्पसायाहरंतु ॥ १५ ॥ इयगुरुडुहतासे प क्खिएचाउमासे। जिणवरडुगथुत्तं वच्छरेवा पवित्तं। पढह सुणह सिज्झा एहऊाएहचित्ते। कुणह मुणह विग्घं जेण घाएहसिग्घं ॥१६॥ इयविजया जियसत्तुपुत्त सिरिअजिअ जिणेसर। तहअइरा विससेण तणय पंचमच क्कीसर। तित्थंकरसोलसमसंति जिणवल्लहसंतह। कुरुमंगल ममहरसुडुरिअमखिलंपि थुणंतह ॥ १७ ॥ ॥ ※ ॥ ॥ ※ ॥ ॥ ※ ॥

इति श्रीलघुअजितशांतिस्तवनं द्वितीयं स्मरणं २ ॥ ※ ॥

॥ ※ ॥ नमिऊणपणयसुरगण। चूडामणिकिरणरंजिअंमणिणो। चल णजुअलं महाभय। पणासणंसंथवंवुच्छं ॥ १ ॥ सडिअकरचरणनहमुह। निबुड्डनासाविवणलावणा। कुठमहारोगानल। फुलिंगनिद्दड्ढसव्वंगा ॥ २ ॥ तेतुहचलणाराहण। सलिलंजलिसेअवढ्ढियच्छाया। वणदवदड्ढागिरिपाय पुव्व पत्तापुणोलच्छिं ॥ ३ ॥ डुव्वायखुभिअजलनिहि। उप्रम्भकल्लोलभीस णारावे। संभंतभयविसंठुल। निज्जामयमुक्कवावारे ॥ ४ ॥ अयदलिअजाण वत्ता। खणेणपावंतिइच्छियंकूलं। पासजिणचलणजुअलं। निच्चंचिअजेनमं तिनरा ॥ ५ खरपवणुद्धअवणदव। जालावलिमिलिअसयल डुमगहणे। डझंतमुद्धमयवहु। भीसणरवभीसणंमिवणे ॥ ६ ॥ जगगुरुणोकमजुअलं।

निव्वावियसयलतिज्ञ्अणान्नोयं । जेसंन्नरंतिमणुआ नकुणइजलणोन्नयंतेसिं ॥ ७ ॥ विलसंतन्नोगन्नीषण । फुरिआरुणनयणतरलजीहालं । उग्गन्नुअंगंनवजलय । सत्थहंन्नीसणायारं ॥ ८ ॥ मणंतिकीडसरिसं । दूरपरिच्छूढविसमविसवेगा । तुहनामक्खरफुडसिद्ध । मंतगुरुआनरालोए ॥ ए ॥ अडवीसुन्निल्लतक्कर । पुलिंदसद्दूलसद्दन्नीमासु । न्नयविहुलवुणकायर । उच्छूरिअपहियसत्थासु ॥ १० ॥ अविलुत्तविहवसारा । तुहनाहपणाम मित्तवावारा । ववगयविग्घासिग्घं । पत्ताहियइच्छियंठाणं ॥ ११ ॥ पज्जलिआनलनयणं । दूरवियारिअमुहंमहाकायं । नहकुलिसघायविअलिय । गयंदकुंन्नत्थलान्नोयं ॥ १२ ॥ पणयससंन्नमपत्थिव । नहमणिमाणिक्कपडिअपडिमस्स । तुहवयणपहरणधरा । सीहंकुद्धंपि नगिणंति ॥ १३ ॥ ससिधवलदंतमुसलं । दीहकरुल्लालवढ्ढि उच्छाहं । महुपिंगनयणजुअलं । ससलिलनवजलहरायारं ॥ १४ ॥ न्नीमं महागइंदं । अच्चासन्नंपितेनविगिणंति । जेतुह्मचलणजुअलं । मुणिवइतुंगंसमल्लीणा ॥ १५ ॥ समरम्मितिक्खखग्गा । न्निघायपविद्धउद्धअकबंदे । कुंतविणिन्निन्न करिकलह । मुक्कसिक्कारपउरम्मि ॥ १६ ॥ निज्जिअदप्पुद्धररिउनरिंद । निवहान्नडाजसंधवलं । पावंतिपावपसमण । पासजिणतुहप्पन्नावेण ॥ १७ ॥ रोगजलजलणविसहर । चोरारिमयंदगयरणन्नयाइं । पासजिणनामसंकित्तणेण । पसमंतिसव्वाइं ॥ १८ ॥ एवंमहान्नयहरं । पासजिणिंदस्ससंथवमुआरं । न्नवियजणाणंदयरं । कल्लाणपरंपरनिहाणं ॥ १ए ॥ रायन्नयजक्खरक्खस्स । कुसुमिणउस्सउणरिक्खपीडासु । संझासुदोसुपंथेउवसग्गेतहयरयणीसु ॥ २० ॥ जोपढइजोअनिसुणइ । ताणंकइणोयमाणतुंगस्स । पासोपावंपसमेउ । सयलन्नुवणच्चिअच्चलणो ॥ २१ ॥ ※ ॥

इति श्रीपार्श्वजिनस्तवनं तृतीयस्मरणं ॥ ३ ॥ ※ ॥ ॥ ※ ॥

॥ ※ ॥ तंजयउजएतित्थं । जमित्थतित्थाहिवेणवीरेण । सम्मंपवत्तिअंन्नवसत्त । संताणसुहजणयं ॥ १ ॥ नासिअसयलकिलेसा निहयकुलेसापसत्थ सुहलेसा । सिरिवद्धमाणतित्थस्स । मंगलंदिंतुतेअरिहा ॥ २ ॥ निद्दड्ढकम्मवीआ । बीआपरमेठिणो गुणसमिद्धा । सिद्धा तिजयपसिद्धा । हणंतुउत्थाणितित्थस्स ॥ ३ ॥ आयारमायरंता । पंचपयारं सयापयासंता । आयरिआतहतित्थं । निहयकुतित्थंपयासंतु ॥ ४ ॥ सम्मसुअवायगावायगा

य । सिअवायवायगावाए । पवयणपमिणीयकए। वणंतुसव्वस्ससंवस्स ॥ ५ ॥ निव्वाणसाङ्गणुज्झअ । साहूणंजणिअसव्वसाहज्झा । तित्थप्पन्नावगाते । इवंतुपरमेठिणोजइणो ॥ ६ ॥ जेणाणुगयंनाणं । निव्वाणफलंचचरणमविह वइ । तित्थस्सदंसणंतं । मंगलमवणेउसिद्धियरं ॥ ७ ॥ निन्नम्मोसुअधम्मो । समग्गन्नव्वंगिवग्गकयसम्मो । गुणसुठिअस्ससंघस्स । मंगलंसम्ममिहदि सउ ॥ ८ ॥ रम्मोचरित्तधम्मो संपाविअन्नव्वसत्तसिवसम्मो । नीसेसकिल्ले सहरो । हवउसयासयलसंवस्स ॥ ८ ॥ गुणगणगुरुणो गुरुणो । सिवसुह मइणो कुणंतु तित्थस्स । सिरिवद्धमाणपहुपयमिअस्स । कुसलंसमग्गस्स। ॥ १० ॥ जियपडिवक्खाजक्खा । गोमुहमायंगगयमुहपमुक्खा । सिरिवं भसंतिसहिआ । कयनयरक्खासिवंदितु ॥११॥ अंबापडिहयमंबा । सिद्धा सिद्धाइआपवयणस्स । चक्केसरिवइरुट्टा । संतिसुरादिसउसुक्खाणि ॥ १२ ॥ सोलसविज्जादेवीउ । दिंतुसंघस्समंगलंविउलं । अच्चुत्तासहिआउ । विस्सु असुयदेवयाइसमं ॥१३॥ जिणसासणकयरक्खा । जक्खाचउवीस सासण सुरावि । सुहन्नावासंतावं । तित्थस्ससयापणासंतु ॥ १४ ॥ जिणपवयणं मिनिरया । विरहाकुपहाउसव्वहासव्वे । वेयावच्चकराविअ । तित्थस्सहवं तुसंतिकरा ॥ १५ ॥ जिणसमय सुद्धसमग्ग । वहिअन्नवाण जणिअसाह ज्जो । गीयरई गीयजसो । सपरिवारोसुहंदिसउ ॥ १६ ॥ गिहगुत्तखित्तज लथल । वणपव्वयवासिदेवदेवीउ । जिणसासणठिआणं । डहाणिसव्वाणि निहणंतु ॥ १७ ॥ दसदिसिपालासक्खित्तपालया । नवग्गहासनक्खत्ता । जोइणिराहुग्गहकालपास । कुलिअद्धपहरेहिं ॥ १८ ॥ सहकालकंटएहिं । सविठिवत्थेहिं कालवेलाहिं । सवेसव्वत्थसुहं । दिसंतुसव्वस्ससंघस्स ॥ १९॥ भवणवइवाणमंतर । जोइसवेमाणिआयजेदेवा । धरणिंदसक्कसहिआ । दलं तुउरिआइंतित्थस्स ॥ २० ॥ चक्कंजस्सजलंतं । गच्छइ पुरउपणासिअतमो हं । तंतित्थस्सभगवउ । नमोनमो वद्धमाणस्स ॥ २१ ॥ सोजयउजिणो वीरो । जस्सज्जविसासणंजएजयइ । सिद्धिप्पहसाहणंकुपह । नासणंसव्व भयमहणं ॥२२॥ सिरिउसभसेणपमुहा । हयभय निवहा दिसंतुतित्थस्स । सव्वजिणाणंगणिहारिणो । णहंवंठिअंसव्वं ॥ २३ ॥ सिरिवद्धमाणतित्थाहि वेण । तित्थंसमप्पिअंजस्स । सम्मंसुहम्मसामी । दिसउसुहं सयलसंघस्स

सं । मंगलकल्लाणआवासं ॥ १ ॥ इत्यादि ॥ नवेनवेपासजिणचंद ॥ ५ ॥
॥ ॥ इतिश्रीपार्श्व जिनस्तवनं ॥ इति सप्तस्मरणानि ॥ ॥

## ॥ ॥ अथ लघुशांतिलि ॥ ॥

॥ ॥ शांतिंशांतिनिशांतं । शांतिंशांताशिवंनमस्कृत्य । स्तोतुशांतिनिमित्तं । मंत्रपदैःशांतयेस्तौमि ॥ १ ॥ उमितिनिश्चितवचसे । नमोनमोनगवतेर्हतेपूजां । शांति जिनायजयवंते । यशस्विनेस्वामिनेदमिनां ॥ २ ॥ सकलातिसेषकमहा । संपत्तिसमन्वितायशस्याय । त्रैलोक्यपूजितायच । नमोनमः शांतिदेवाय ॥ ३ ॥ सर्वामरसुसमूह । स्वामिकसंपूजितायनजिताय । नुवनजनपालनोद्यत । तमायसततंनमस्तस्मै ॥ ४ ॥ सर्व्वडुरितौघ नाशन कराय । सर्वाशिव प्रशमनाय । डुष्टग्रहनूत पिशाच । शाकनीनां प्रमथनाय ॥ ५ ॥ यस्येतिनाममंत्र । प्रधानवाक्योपयोगकृततोषा । विजया कुरुतेजनहित । मिति चनुता नमततं शांतिं ॥ ६ ॥ नवतु नमस्ते नगवति । विजये सुजये परापरैरजिते । अपराजिते जगत्यां । जयतीति जयावहे नवति ॥ ७ ॥ सर्वस्यापिच संघस्य । नद्रकल्याण मंगलप्रददे । साधूनांचसदाशिव । तुष्टि पुष्टिप्रदेजीयाः ॥ ८ ॥ नव्यानां कृतसिद्धे । निर्वृतिनिर्वाण जननि सत्वानां । अनयप्रदाननिरते । नमोस्तु स्वस्तिप्रदेतुन्यं ॥ ९ ॥ नक्तानां जंतुनां । शुनावहे नित्यमुद्यतेदेवी । सम्यग्दृष्टीनांच । धृति रति मति बुद्धि प्रदानाय ॥ १० ॥ जिनशासननिरतानां । शांतिनतानांच जगतिजंतूनां । श्रीसंपतकीर्तियशो । वर्द्धनिजयदेवि विजयस्व ॥ ११ ॥ सलिलानल विषविषधर । डुष्टग्रह राजरोग रणनयतः राक्षसरिपुगणमारी । चौरेतिश्वापदादिन्यः ॥ १२ ॥ अथ रक्ष रक्ष सुशिवं । कुरु २ शान्तिंच कुरु कुरु सदेति । तुष्टिंकुरु२ पुष्टिं । कुरु २ स्वस्तिं च कुरु कुरुत्वं ॥ १३ ॥ नगवति गुणवति शिवशांति । तुष्टि पुष्टि स्वस्तीह । कुरु २ जनानां । उमिति नमो नमो ह्रॉं ह्रीं ह्रुं ह्रः । यः क्षः ह्रीं फट् फट् स्वाहा ॥ १४ ॥ एवं यन्नामाक्षर । पुरुस्सरंसंस्तुता जयादेवी । कुरुते शान्ति निमित्तं । नमो नमः शान्तये तस्मै ॥ १५ ॥ इतिपूर्व्वसूरिदर्शित । मंत्रपविदर्निंतः स्तवः शांतेः । सलिलादिनयविनाशी । शांत्यादिकरश्च नक्ति

मतां ॥ १६ ॥ यश्चेनं पठति सदा । श्रृणोति भावयतिवा यथायोगं । सहि शान्तिपदं यायात् । सूरिः श्रीमानदेवश्च ॥ १७ ॥ ※ ॥
इति लघुशान्तिस्तोत्रं ॥ ※ ॥ ॥ ※ ॥ ॥ ※ ॥ ॥ ※ ॥

## ॥ ※ ॥ अथ वृद्धशांति ॥ ※ ॥

॥ ※ ॥ भो भो भव्याः शृणुतवचनं प्रस्तुतं सर्वमेतत् । ये यात्रायां त्रिभुवनगुरोरार्हता भक्तिभाजः । तेषां शान्तिर्भवतु भवतामर्हदादिप्रभावा । दारोग्य श्री धृति मतिकरी क्लेश विध्वंसहेतुः ॥ १ ॥ भोभोभव्यलोकाइह हि भरतैरावत विदेहसंभवानां । समस्ततीर्थंकृतां जन्मन्यासनप्रकंपानन्तरं । अवधिना विज्ञाय सौधर्माधिपतिः । सुघोषाघंटाचालनानन्तरं । सकलसुरासुरेंद्रैः सह समागत्य सविनयमर्हद्भट्टारकं गृहीत्वा । गत्वा कनकाद्रिशृंगे । विहितजन्माभिषेकः । शान्ति मुद्घोषयति । ततोहं कृतानुकारमिति कृत्वा महाजनो येन गतस्स पंथाः । इति भव्य जनैः सहसमागत्य । स्नात्रपीठे स्नात्रंविधाय । शान्तिमुद्घोषयामि । तत्पूजा यात्रास्नात्रादि महोत्सवानन्तरं । इतिकृत्वा कर्णं दत्वा निशाम्यतां स्वाहा । ॐ पुण्याहं २ । प्रीयंतां २ भगवन्तोऽर्हन्तः सर्वज्ञाः सर्वदर्शिनः । त्रैलोक्यनाथा । स्त्रैलोक्यमहिता । स्त्रैलोक्यपूज्या । स्त्रैलोक्येश्वरा । स्त्रैलोक्योद्योतकराः ॥ ॐ श्रीकेवलज्ञानी ॥ १ ॥ निर्वाणी ।२। सागर ।३। महायश ।४। विमल ।५। सर्वानुभूति ।६। श्रीधर । ७ । दत्त । ८ । दामोदर । ९ । सुतेजा । १० । स्वामी ।११ । मुनिसुव्रत । १२ । सुमति । १३ । शिवगति । १४ । अस्ताग । १५ । नमीश्वर । १६ । अनिल । १७ । यशोधर । १८ । कृतार्घ । १९ । जिनेश्वर । २० । शुद्धमति । २१ । शिवकर । २२ । स्यन्दन । २३ । संप्रति । २४ ॥ ※ ॥ एते अतीतचतुर्विंशतितीर्थकराः ॥ ※ ॥ ॐ श्रीऋषभ ।१। अजित । २ । संभव । ३ । अभिनन्दन । ४ । सुमति । ५ । पद्मप्रभ । ६ । सुपार्श्व । ७ । चंद्रप्रभ । ८ । सुविधि । ९ । शीतल । १० । श्रेयांस । ११ वासुपूज्य ।१२। विमल ।१३। अनन्त । १४ । धर्म ।१५। शान्ति । १६ । कुंथु । १७ । अर । १८ । मल्लि । १९ । मुनिसुव्रत । २० । नमि । २१ ।

नेमि । २२ । पार्श्व । २३ । वर्द्धमान । २४ । प्रमुखावर्तमानजिनाः ॥☼॥ ॥ ॐ श्रीपद्मनाभ । १ । सूरदेव । २ । सुपार्श्व । ३ । स्वयंप्रभ । ४ । सर्वानुभूति । ५ । देवश्रुत । ६ । उदय । ७ । पेढाल । ८ । पोट्टिल । ९ । शतकीर्त्ति । १० । सुव्रत । ११ । अमम । १२ । निष्कषाय । १३ । निष्पुलाक । १४ । निर्मम । १५ । चित्रगुप्ति । १६ । समाधि । १७ । संवर । १८ । यशोधर । १९ । विजय । २० मल्लि । २१ । देव । २२ । अनन्तवीर्य । २३ । भद्रंकर । २४ ॥☼॥ एते भावितीर्थकराजिनाः ॥☼॥

॥☼॥ शान्ताः शान्तिकराः भवंतु मुनयो मुनिप्रवरा । रिपुविजयदुर्भिक्षकान्तारेषु दुर्गमार्गेषु रक्षंतु वो नित्यं । ॥ ॐ श्रीनाभि । १ । जितशत्रु । २ । जितारि । ३ । संवर । ४ । मेघ । ५ । धर । ६ । प्रतिष्ट । ७ । महसेननरेश्वर । ८ । सुग्रीव । ९ । दृढरथ । १० । विष्णु । ११ । वसुपूज्य । १२ । कृतवर्म । १३ । सिंहसेन । १४ । भानु । १५ । विश्वसेन । १६ । शूर । १७ । सुदर्शन । १८ । कुंभ । १९ । सुमित्र । २० । विजय । २१ । समुद्रविजय । २२ । अश्वसेन । २३ । सिद्धार्थ । २४ । ॥☼॥ वर्तमानचतुर्विंशतिजिनजनकाः ॥☼॥ ॐ श्रीमरुदेवा । १ विजया । २ । सेना । ३ । सिद्धार्था । ४ । सुमंगला । ५ । सुसीमा । ६ । पृथिवीमाता । ७ । लक्ष्मणा । ८ । रामा । ९ । नंदा । १० । विष्णु । ११ । जया । १२ । स्यामा । १३ । सुयशा । १४ । सुव्रता । १५ । अचिरा । १६ । श्री । १७ । देवी । १८ । प्रभावती । १९ । पद्मा । २० । वप्रा । शिवा । २२ । वामा । २३ । त्रिशला । २४ । ॥☼॥ वर्त्तमानजिनजनन्यः ॥☼॥ ॐ श्री गोमुख ॥ १ । महायक्ष । २ । त्रिमुख । ३ । यक्षनायक । ४ । तुंवरु । ५ । कुसुम । ६ । मातंग । ७ । विजय । ८ । अजित । ९ । ब्रह्मा । १० । यक्षराज । ११ । कुमार । १२ । षण्मुख १३ । पाताल । १४ । किन्नर । १५ । गरुड । १६ । गंधर्व । १७ । यक्षराज । १८ । कुबेर । १९ । वरुण । २० । भृकुटि । २१ । गोमेध । २२ । पार्श्व । २३ । ब्रह्मशांति । २४ । ॥☼॥ वर्त्तमानजिनयक्षाः ॥☼॥ ॐ चक्रेश्वरी । १ । अजितवला । २ । दुरितारि । ३ कालौ । ४ । महाकाली । ५ । श्यामा । ६ । शांता । ७ । भृगुटि । ८ । सुतारका । ९ । अशोका । १० । मानवी । ११ । चंमा । १२ । विदिता

। १३ । अंकुशा । १४ । कंदर्पा । १५ । निर्वाणी । १६ । वला । १७ । धारणी । १८ । धरणप्रिया । १९ । नरदत्ता । २० । गांधारी । २१ । अंबिका । २२ । पद्मावती । २३ । सिद्धायिका । २४ । ॥ ※ ॥ वर्त्तमान चतुर्विंशति-तीर्थकरशासनदेव्यः ॥ ※ ॥ ॐ ह्रीं श्रीधृति कीर्ति कांति बुद्धि लक्ष्मी मेधा विद्या साधन प्रवेशनिवेशनेषु । सुगृहीतनामानो । जयंति - ते जिनेंद्राः ॐ रोहिणी । १ । प्रज्ञप्ती । २ । वज्रशृंखला । ३ । वज्रांकुशा । ४ । चक्रेश्वरी । ५ । पुरुषदत्ता । ६ । काली । ७ । महाकाली । ८ । गौरी । ९ । गांधारी । १० । सर्वास्त्रमहाज्वाला । ११ । मानवी । १२ । वैरोट्या । १३ । अच्छुप्ता । १४ । मानसी । १५ । महामानसी । १६ । एताः षोडशविद्यादेव्यो रक्षंतुमे स्वाहा । ॐ आचार्योपाध्यायप्रभृतिचातुर्वर्णस्य श्रीश्रमणसंघस्य शान्तिर्भवतु । ॐ तुष्टिर्भवतु । पुष्टिर्भवतु । ॐ ग्रहाश्चंद्र सूर्या गारक बुध बृहस्पति शुक्र शनैश्चर राहु केतु सहिताः सलोकपालाः सोम यम वरुण कुबेर वासवादित्य स्कन्द विनायक येचान्येपि ग्राम नगर क्षेत्रदेवतादय स्ते सर्वे प्रीयंतां २ अक्षीणकोस कोष्ठागारा नरपतयश्च भवंतु स्वाहा । ॐ पुत्र मित्र भ्रातृ कलत्र सुहृत स्वजनसंबंधिबंधुवर्गसहिताः नित्यंचामोदप्रमोदकारिणो भवंतु । अस्मिंश्च भूमंडले आयतननिवासिनां । साधु साध्वी श्रावक श्राविकाणां । रोगोपसर्ग व्याधिदुःख दौर्मनस्योपशमनाय शांतिर्भवतु । ॐ तुष्टि पुष्टि ऋद्धि वृद्धि माङ्गल्योत्सवाः भवंतु । सदा प्रादुर्भूतानि दुरितानि पापानि शाम्यंतु । शत्रवः पराङ्मुखा भवंतु स्वाहा । श्रीमते शान्तिनाथाय । नमः शान्तिविधायिने । त्रैलोक्यस्यामराधीश । मुकुटाभ्यर्चितांघ्ये ॥ १ ॥ शान्तिः शान्तिकरः श्रीमान् । शान्तिः दिशतु मे गुरुः । शान्तिरेव सदातेषां । येषां शांतिर्गृहे गृहे ॥ २ ॥ ॐ उन्मृष्ट रिष्ट दुष्ट ग्रहगति दुःस्वप्नदुर्निमित्तादि संपादितहितसंपत् नामग्रहणं जयतु शांतेः ॥ ३ ॥ श्रीसंघपौरजनपद राजाधिपराजसंनिवेशानां । गोष्ठीपुरमुख्यानां । व्याहरणैर्व्याहरेच्छांतिं ॥ ४ ॥ श्रीश्रमणसंघस्य शांतिर्भवतु । श्रीपौरलोकस्य शांतिर्भवतु । श्रीजनपदानां शांतिर्भवतु । श्रीराजाधिपानां शांतिर्भवतु । श्रीराजसंनिवेशानां शांतिर्भवतु । श्रीगोष्ठिकानां शांतिर्भवतु । ॐ स्वाहा २ ॥ ॐ ह्रीं श्री पार्श्वनाथाय स्वाहा । एषा शांतिःप्रतिष्टा यात्राभ्या

न कोलहइ गुणगुरुउ नवकार ॥ १२ ॥ अमसंपय नवपय सहित इगसठ लघु अक्षर । गुरुअक्षर सत्तेव एहजाणो परमाक्षर । गुरुजिणवल्लहसूरिन्नणै सिवसुक्खहकारण । नरय तिरियगइ रोग सोग वहुडक्ख निवारण । जल थल पव्वय वन गहन समरण ऊवे इकचित्त । पंचपरमेष्ठि मंत्रहतणी सेवा देज्यो नित्त ॥ १३ ॥ इति पंच परमेष्ठि नमस्कारमहात्म्यसंपूर्णम ॥

## ॥ ॥ अथ तिजय पऊत्त स्तोत्र ॥ ॥

॥ ॥ तिजय पऊत्त पयासं । अठ महा पाडिहेर जुत्ताणं । समय खित्त ठिआणं । सरेमि चक्कं जिणिंदाणं ॥ १ ॥ पणवीसा य असीया । पन रस पणास जिणवर समूहो । नासेउ सयलडरिअं । नविआणं नत्तिजुत्ताणं ॥ २ वीसा पणयाला विअ । तीसा पणहत्तरी जिणवरिंदा । गह नूअ रक्ख साइणी । घोरुवसग्गं पणासेउ॥ ३ ॥ सत्तरि पणतीसाविअ । सठी पंचेव जिणगणोएसो । वाहि जल जलण हरि करि । चोरारि महान्नयं हरउ ॥ ४ ॥ पणपणाय दसेवअ । पणठी तहयचेव चालीसा । रक्खंतु मे सरीरं देवा सुरपणमिआ सिद्धा ॥ ५ ॥ ॐ हरऊंहः सरसुंसः । हरऊंहः तहयचेव सरसुंसः । आलिहअ नामगप्नं । चक्कं किर सव्वउ नद्दं ॥ ६ ॥ ॐ रोहिणि पणत्ति वज्रश्रृंखला । तहय वज्रअंकुसिआ । चक्केसरि नरदत्ता। कालि महा कालि तहयगोरी ॥ ७ ॥ गंधारि महाजाला । माणवि वइरुद तहयअछुत्ता । माणसि महमाणसिआ । विज्जादेवीउ रक्खंतु ॥ ८ ॥ पंचदस कम्मनूमिसु उप्पणं सत्तरिं जिणाणसयं । विविहरयणाण वणो । वसोहिअं हरउ डरिआइं ॥ ए ॥ चउतीस अइसय जुआ । अठ महापामिहेर कयसोहा । तित्थयरा गयमोहा । ऊाए अव्वा पयत्तेण ॥ १० ॥ ॐ वरकणय संखविद्रुम । मरगय घणसंनिहं विगय मोहं । सत्तरिसयं जिणाणं । सव्वामरपूइअं वंदे स्वाहा ॥ ११ ॥ ॐ नुवणवइ वाणमंतर । जोइसवासी विमाणवासीअ । जे केवि डुठदेवा । ते सव्वे उवसमंतु मे स्वाहा ॥ १२ ॥ चंदण कप्पूरेणं । फलहे लिहिऊण खालिअंपीअं । एगंतर गहमुग्गय । साइणिनूअपणासेइ ॥ १३ ॥ इय सत्तरिसय जंतं । सम्मंमंतं डुवार पमिलिहिअं । डरिआरि विजयंतं । निन्नंतं निच्चमच्चेह ॥ १४ ॥ इति सप्तत्युत्तरशतजिनचक्र स्तोत्रं ॥

## ॥ ※ ॥ अथ दोसावहार स्तोत्र ॥ ※ ॥

॥ ※ ॥ दोसावहारदक्खो । नालीयायर वियासिगोपसरो । रयणत्तयस्सज णउ । पासजिणो जयउ जयचक्खू ॥ १ ॥ कयकुवलय पडिबोहो । हरिणं कियविग्गहो कलानिलउ । विहियार विंद महणो । दियराओ जयउ पास जिणो ॥ २ ॥ कंतीइनिज्जिणंतो । सिंदूरं पुहविनंदणो कूरो । जयजंतुअम यवक्को । सुमंगलो जयउ पज्ञपासो ॥ ३ ॥ उप्पलदलनीलरुई । हरिमंमल संथुओ इलाणंदो । रयणियरदारउ मह । बुहोपसीयज्ञ पासजिणो ॥ ४ ॥ नाहियवाय वियङ्को । नायरथोणग्यरायकयपूउ । सिरिपासनाहदेवो । देवाय रिउ सुहंदिसउ ॥ ५ ॥ रायावह समुज्जल । तणुप्पह मंम्लोमहाजुई । असुरे हिंनमिज्जंतो । पासजिणिंदो कवीजयउ ॥ ६ ॥ तिमिरासि समारूढो । संतो डुक्खावहोजयंमिथिरो । वज्जल तमासरिससरी । जयचक्खुसुउ जयउपासो ॥ ७ ॥ कवलीकयदोसायर । मायंम्ररहं अहो तणुविमुक्कं । लोयाभ्भरणीभूयं । पासजिणं सत्तमंसरह ॥ ८ ॥ डरिआइं पासनाहो । सिहावमाली नहो भ वणकेऊ । दूरंतमरासीउ । सत्तमठाणविउ हरउ ॥ ९ ॥ इय नवगह थुइग ब्भं । जिणपहसूरीहिं गुंफिअं थवणं । तुहपास पढइ जोतं । असुहाविगहा नपीडंति ॥ १० ॥ इति नवग्रहस्तुतिगर्भित श्रीपार्श्वजिनस्तोत्रम् ॥ ※ ॥

---

## ॥ ※ ॥ अथ जगद्गुरु ए ग्रहस्तोत्र ॥ ※ ॥

॥ ※ ॥ जगद्गुरु नमस्कृत्य । श्रुत्वा सद्गुरुभाषितं । ग्रहशांतिं प्रवि क्ष्यामि । लोकानां सुखहेतवे ॥ १ ॥ जिनेंद्राः खेचराज्ञेया । पूजनीया विधिक्रमात् । पुष्पैर्विलेपनै र्धूपैः । नैवेद्यै स्तुष्टिहेतवे ॥२॥ पद्मप्रभस्यमार्त्तण्डः चंद्र श्चंद्रप्रभस्यच । वासुपूज्योभूमिपुत्रो । बुधोप्यष्टजिनेश्वराः ॥ ३ ॥ विमलानंतधर्माणां । शांति कुंथु नमि स्तथा । वर्द्धमानो जिनेंद्राणां । पादपद्मे बुधंन्यसेत् ॥ ४ ॥ ऋषभाजितसुपार्श्वा । श्चाभिनंदनशीतलौ । सुमतिःसंभ वःस्वामी । श्रेयांसश्चबृहस्पतिः ॥ ५ ॥ सुविधे कथितः शुक्रः । सुव्रतश्चश नैश्वरः । नेमिनाथोभवेद्राहुः । केतुः श्रीमल्लिपार्श्वयोः ॥ ६ ॥ जन्मलग्नेचरा शौच । यदा पीडंति खेचराः । तदा संपूजयेद्धीमान् । खेचरैः सहितान् जि

नान् ॥ ७ ॥ पुष्पैर्गंधादिभिर्धूपै । नैवेद्यैः फलसंयुतैः । वर्णसदृस दानैश्च वासोभिर्दक्षिणान्वितैः ॥ ८ ॥ ॐ आदित्यसोम मङ्गल । बुधगुरुशुक्र शनैश्च रोराहुः । केतुःप्रमुखाखेटा । जिनपतिपुरतोवतिष्ठंतु ॥ ९ ॥ जिननामकृतोच्चारा । देशनक्षत्रवर्णके । स्तुताश्चपूजिताभक्त्या । ग्रहाः संतुसुखावहा ॥१०॥ जिनानामग्रतः स्थित्वा । ग्रहाणांतुष्टिहेतवे । नमस्कारशतंभक्त्या । जपेदष्टोत्तरं नरं ॥ ११ ॥ भद्रबाहु रुवाचेदं । पंचमः श्रुतकेवली । विद्याप्रवादतः पूर्वाद् । ग्रहशांतिर्विनिर्मितः ॥१२॥ इति श्रीनवग्रहशांतिकारकजिनस्तोत्रं ॥

## ॥ ※॥ अथ धम्मो मंगल स्वाध्याय ॥ ※ ॥

॥※॥ धम्मो मंगलमुक्किठं । अहिंसा संजमो तवो । देवावि तं नमंसंति । जस्स धम्मेसयामणो ॥ १ ॥ जहा डुम्मस्सपुप्फेसु । भमरो आविअइरसं । नय पुप्फं किलामेइ । सोअपीणेइअप्पयं ॥ २ ॥ एमेए समणावुत्ता । जेलोए संति साहुणो । विहंगमाव पुप्फेसु । दाणभत्तेसणेरया ॥ ३ ॥ वयंच वित्तिलब्भामो । नयकोइउवहम्मई । अहागडे सुरीयंति । पुप्फेसुभमरो जहा ॥ ४ ॥ महुकारसमाबुद्धा । जे भवंति अणिस्सिआ । णाणापिंमरयादंता । तेणवुच्चंति साहुणोत्तिबेमि ॥ ५ ॥ डुमपुप्फियानामझयणंसम्मत्तं ॥ ※ ॥

## ॥ ※ ॥ अथ जिनपंजरस्तोत्र ॥ ※ ॥

॥※॥ ॐ ह्रीं श्रीं अर्हं अर्हद्भ्योनमोनमः । ॐ ह्रीं श्रीं अर्हं सिद्धेभ्यो नमोनमः । ॐ ह्रीं श्रीं अर्हं आचार्य्येभ्योनमोनमः । ॐ ह्रीं श्रीं अर्हंउपाध्यायेभ्यो नमोनमः । ॐ ह्रीं श्रीं अर्हंश्री गौतमस्वामि प्रमुख सर्वसाधुभ्यो नमोनमः ॥ १ ॥ एषः पंचनमस्कारः । सर्वपापक्षयंकरः । मंगलानांचसर्वेषां । प्रथमं भवतिमंगलं ॥२॥ ॐ ह्रींश्रीं जएविजए । अर्हंपरमात्मनेनमः । कमलप्रभसूरिंद्रो । भाषतेजिनपंजरं ॥ ३ ॥ एकभक्तोपवासेन । त्रिकालंय पठेदिदं । मनोभिलषितंसर्वं । फलंसलभतेध्रुवं ॥ ४ ॥ भूशय्या ब्रह्मचर्येण । क्रोधलोभविवर्जितः । देवताग्रेपवित्रात्मा । षण्मासैर्लभतेफलं ॥ ५ ॥ अर्हंतंस्थापयेन्मुर्द्धनि । सिद्धंचक्षुर्ललाटके । आचार्यं श्रोत्रयोर्मध्ये । उपा

ध्यायंतुब्राणके ॥ ६ ॥ साधुवृंदं मुखस्याग्रे ॥ मनःशुद्धंविधायच । सूर्यचंद्र निरोधेन । सुधीःसर्वार्थसिद्धये ॥ ७ ॥ दक्षिणे मदनद्वेषी । वामपार्श्वे स्थितो जिनः । अंगसंधिषु सर्वज्ञ । परमेष्टिशिवंकरः ॥ ८ ॥ पूर्वाशांश्रीजिनोरक्षे । दाग्नेयिंविजितेंद्रियः । दक्षिणाशांपरंब्रह्म । नैरुतिंचत्रिकालवित् ॥ ९ ॥ पश्चिमाशां जगन्नाथो । वायव्यंपरमेश्वरः । उत्तरांतीर्थकृत्सर्वा । मीशानींचनिरंजनः ॥ १० ॥ पातालंभगवानर्हं । नाकाशं पुरुषोत्तमः । रोहिणी प्रमुखा देव्यो । रक्षंतुसकलंकुलं ॥ ११ ॥ ऋषभोमस्तकंरक्षे । दजितोपिविलोचने । संभवःकर्णयुगलं । नाशिकां चाभिनंदनः ॥ १२ ॥ ठष्टौ श्रीसुमती रक्षेत् । दंता न्पद्मप्रभोविभुः । जिव्हां सुपार्श्वदेवोयं । तालु चंद्रप्रभोविभुः ॥ १३ ॥ कंठं श्रीसुविधीरक्षेत् । हृदयं श्रीसुशीतलः । श्रेयांसोबाहुयुगलं । वासुपूज्यः करद्वयं ॥ १४ ॥ अंगुली विमलोरक्षे । दनंतोसौस्तनावपि । सुधर्मो प्युदरास्थीनि । श्रीशांतिर्नाभिमंमलं ॥१५॥ श्रीकुंथर्गुह्यकंरक्षे । दरोरोमकटीतटं । मल्लिरुरूपृष्टिवंशं । जंघेचमुनिसुव्रतः ॥ १६ ॥ पादांगुलीर्नमीरक्षेत् । श्रीनेमिश्चरणद्वयं । श्रीपार्श्वनाथःसर्वांगं । वर्द्धमानश्चिदात्मकं ॥ १७ ॥ पृथिवी जलतेजस्क । वाय्वाकाशमयंजगत् । रक्षेदशेषपापेभ्यो । वीतरागोनिरंजनः ॥ १८ ॥ राजद्वारेश्मशानेवा । संग्रामेशत्रुसंकटे । व्याघ्रचौराग्निसर्पादि । भूतप्रेतभयाश्रिते ॥ १९ ॥ अकालमरणप्राप्ते । दारिद्र्यापत्समाश्रिते । अपुत्रत्वेमहादोषे । मूर्खत्वेरोगपीडिते ॥ २० ॥ डाकिनी शाकिनी ग्रस्ते । महाग्रह गणार्दिते । नद्युत्तारे ध्ववैषम्ये । व्यसनेचापदिस्मरेत् ॥ २१ ॥ प्रातरेव समुत्थाय । यःस्मरेज्जिनपंजरं । तस्य किंचिद्भयंनास्ति । लभ्यते सुखसंपदं ॥ २२ ॥ जिनपंजर नामेदं । यःस्मरत्यनुवासरं । कमलप्रभराजेंद्रः । श्रियंसलभतेनरः ॥ २३ ॥ प्रातःसमुत्थायपठेतकृतज्ञो । यस्तोत्रमेतज्जिनपंजराख्यं । आसादयेत्सः कमलप्रभाख्यं । लक्ष्मी मनोवांछितपूरणाय ॥ २४ ॥ श्रीरुद्रपल्लीयवरेण्यगच्छे । देवप्रभाचार्य्यपदाब्जहंसः । वादींद्रचूडामणिरेपजैनो । जीयाद्गुरुः श्रीकमलप्रभाख्यः ॥ २५ ॥ ॥ ॥ ॥ ॥ ॥

॥ ॥ इति श्रीजिनपंजरस्तोत्रसंपूर्णम् ॥ ॥ ॥ ॥

॥ ॥ इस महाप्रभावीक जिनपंजरस्तोत्रकों सुद्धगुरूकेपास सीखके प्रभातसमें सदागुणे तो कोई शरीरमें उपद्रव न होय ॥ ॥

## ॥ ॐ ॥ अथ लघु जिनसहस्रनामः ॥ ॐ ॥

॥ ॐ ॥ नमस्त्रिलोकनाथाय । सर्वज्ञाय महात्मने । वक्ष्ये तस्यैव नामानि । मोक्षसौख्याभिलाषया ॥ १ ॥ निर्मलः शाश्वतो शुद्धः । निर्विकल्पो निरामयः । निःशरीरो निरातंको । सिद्धः सूक्ष्मो निरंजनः ॥ २ ॥ निष्कलंको निरालंबो । निर्मोहो निर्मलोत्तमः । निर्भयो निरहंकारो । निर्विकारो थनिष्क्रियः ॥ ३ ॥ निर्दोषो निरुजःशांतः । निर्भेद्यो निर्ममःशिवः । निस्तरंगो निराकारो । निष्कर्मोनिष्कलप्रभुः ॥ ४ ॥ निर्वादो निरुपज्ञानः । निरागो निरघोजिनः । निःशब्दःप्रतिमश्लेष्टः । उत्कृष्टो ज्ञानगोचरः ॥ ५ ॥ निःसंगात् प्राप्तकैवल्यो । नैष्टकः शब्दवर्जितः । अनिंद्यो महापूतात्मा । जगत्शिखर शेखरः ॥ ६ ॥ निःशब्दो गुणसंपन्न । पापताप प्रणाशनः । सोपि योगात् शुभंप्राप्तः । कर्मद्योतिवलावहः ॥ ७ ॥ अजरो अमरः सिद्धः । अचिंतःअक्षयो विभुः । अमूर्त्तः अच्युतोब्रह्म । विष्णुरीश प्रजापति ॥ ८ ॥ अनिंद्यो विश्वनाथश्च । अजो अनुपमोभवः। अप्रमेयो जगन्नाथ । बोधरूपो जिनात्मकः ॥ ९ ॥ अव्ययः सकलाराध्यो । निष्पन्नो ज्ञानलोचनः । अभेद्यो निर्मलो नित्यः । सर्वसल्यविवर्जितः ॥ १० ॥ अजेयः सर्वतोभद्रः । निष्कषायो भवांतकः । विश्वनाथः स्वयंबुद्धः । वीतरागोजिनेश्वरः ॥ ११ ॥ अंतको सहजानंदः । अवाङ्मानसगोचरः । असाध्यःशुद्धश्चैतन्यः कर्म नो कर्मवर्जितः ॥ १२ ॥ अनंतो विमल ज्ञानी । स्पृहीश्च निष्प्रकाशकः । कर्म्माजितो महात्मानः । लोकत्रयशिरोमणिः ॥ १३ ॥ अव्याबाधो वरःशंभुः । विश्ववेदी पितामहः । सर्वभूतहितोदेव । सर्वलोकसरण्यकः ॥ १४ ॥ आनंदरूपचैतन्यो । भगवां स्त्रिजगद्गुरुः । अनंतानंतधीशक्तिः । सत्यव्यक्ताव्यात्मकः ॥ १५ ॥ अष्टकर्म्मविनिर्मुक्तः । सप्तधातुविवर्जित । गौरवादित्रयादूरः । सर्वज्ञानादिसंयुतः ॥ १६ ॥ अभयः प्राप्तकैवल्यः । निर्माणो निरपेक्षकः । निष्कलं केवलज्ञानी । मुक्तिसौख्यप्रदायकः ॥ १७ ॥ अनामयो महाराध्यो । वरदो ज्ञानपावकः। सर्वेशः सत्सुखावासः । जिनेंद्रोमुनिसंस्तुतः ॥ १८ ॥ अन्यूनपरमज्ञानी । विश्वतत्वप्रकाशकः । प्रबुद्धो भगवान्नाथः । प्रस्तुतः पुण्यकारकः ॥ १९ ॥ शंकरः सुगतो रौद्रः । सर्वज्ञो मदनांतकः । ईश्वरो भुवनाधीशः । सचित्तः पुरुषोत्तमः ॥ २० सदोजातमहात्मानं । विमुक्तो

मुक्तिवल्लभः । योगींद्रो नादिसंसिद्धः । निरीहो ज्ञानगोचरः ॥ २१ ॥ सदा शिवां चतुर्वक्रः । सत्सौख्य त्रिपुरांतकः । त्रिनेत्रःत्रिजगत्पूज्यः । कल्याणको ष्टमूर्त्तिकः ॥२२॥ सर्वसाधुजनैर्वंद्यः । सर्वपापविवर्जित । सर्वदेवाधिकोदेवोः । सर्वभूत हितंकरः ॥ २३ ॥ स्वयंविद्यो महात्मानं । प्रसिद्धःपापनाशनः । तनुमात्रश्चिदानंदः । चैतन्यश्चैत्यवैभवः ॥ २४ ॥ सकलातिशयोदेव । मु क्तिस्थोमहतांमहः । मुक्तिकार्यायसंतुष्टो । निरागःपरमेश्वरः ॥ २५ ॥ महा देवो महावीरो । महामोहविनाशकः । महाभावो महादर्शः । महामुक्तिप्र दायकः ॥ २६ ॥ महाज्ञानी महायोगी । महातपो महात्मकः । महर्द्धि को महावीर्यो । महांतिकपदस्थितः ॥ २७ ॥ महापूज्यो महावंद्यो । महा विघ्नविनाशकः । महासौख्यो महापुंसो । महामहिमअच्युतः ॥२८॥ मुक्ता मुक्तिजसंवोधः । एकानेकविनिश्चलः । सर्ववंधविनिर्मुक्तो । सर्वलोकप्रधानकः ॥ २९ ॥ महाशूरो महाधीरो । महादुःखविनाशकः । महामुक्तिप्रदोधीरो । म हाढ्यो महागुरुः ॥३० ॥ निर्मारोमारविध्वंसी । निष्कामोविपयाच्युतः । भ गवंतो महाशांतो । शांतिकल्याणकारकः ॥ ३१ ॥ परमात्मा परंज्योतिः । परमेष्टी परमेश्वरः । परमात्मापरानंदोः । परंपरम आत्मकः ॥ ३२ ॥ प्रस्तुता नंतविज्ञानी । सख्यानिर्वाणसंयुतः । नाकृतिं नाकृरोवर्णी । व्योमरूपो जिता त्मकः ॥ ३३ ॥ व्यक्ताव्यक्तजसंवोधः । संसारछेदकारणः । निरवद्योमहा राध्यः । कर्मजिद्धर्मनायकः ॥ ३४ ॥ वोधसत्त्व जगद्वंद्यो । विश्वात्मा नर कांतकः । स्वयंभू पापहृत्पूज्यः । पुनीतोविभवःस्तुतः ॥ ३५ ॥ वर्णातीतो म हातीतो । रूपातीतो निरंजनः । अनंतज्ञानसंपूर्णो । देवदेवेशनायकः ॥३६॥ वरेण्योभवविध्वंसी । योगिनांज्ञानगोचरः । जन्ममृत्युजरातीतः । सर्वविघ्नहरो हरः ॥३७॥ विश्वदृक्भव्यसंवंद्यः । पवित्रोगुणसागरः । प्रसन्नः परमा राध्यः लोकालोकप्रकाशकः ॥ ३८ ॥ रत्नगर्भो जगत्स्वामी । इंद्रवंद्यःसुरर्चितः । निष्प्रपंचोनिरातंको । निःशेप क्लेशनाशकः ॥ ३९ ॥ लोकेशो लोकसंसेव्यो । लोकालोक विलोकनः । लोकोत्तमो त्रिलोकेशो । लोकाग्र शिखरस्थितः ॥ ४० ॥ नामाष्टकसहस्राणि । ये पठन्ति पुनः पुनः । ते निर्वाणपदंयांति । मुच्यतेनात्र संशयः ॥ ४१ ॥ ※ ॥ ॥ ※ ॥ ॥ ※ ॥

॥ ※ ॥ इति भद्रवाहुस्वामिना विरचितं लघुसहस्रनाम संपूर्णम् ॥ ※ ॥

मंदं ॥ ३ ॥ सकलभव्य सरोजविकाशिका । कुमतिसंत मसोच्चयनाशिका । जिनवरानन पद्मगतोन्मुदा । भवतु वाग्जिनलाभ शुभार्थदा ॥ ४ ॥

॥ ※ ॥ इति पार्श्वजिनस्तोत्रम् ॥ ※ ॥ ॥ ※ ॥ ॥ ※ ॥

॥ ※ ॥ श्रीमत्पार्श्व जिनेश्वरस्यविलसद् ज्ञानामृतांभोनिधेः । सद्भावेन परस्वरूपविरते मुक्त्यास्पदेतस्थुषः । सद्भूतप्रतिबिंबतस्तु सुतरां गौमीपुरोभा सिनः । सोल्लासं प्रणिपत्य सत्य मनसा तत्रैव नित्यं स्मरे ॥ १ ॥ यत्पादां बुज दर्शनोत्सुकधियो भव्या व्रजंतोध्वनि । स्पृश्यंन्ते नहि दुष्टजंतुनिवहै र्वन्यै र्नवा तस्करैः । नैवोज्वालदवानलै र्जलचराकीर्णैर्जलैर्जातुनो । सःश्रीपार्श्वविभु र्व्यचिन्त्यमहिमा दृश्योनकेषांभवेत् ॥ २ ॥ हित्वान्तः करणाद्भुतं कुटिलतां मोहादिनोद्भाविता । धृत्वा निर्म लभावनांच विधिना यद्भक्तिमातन्विता । लभ्य न्ते नरराज निर्जर वर श्रेणी सुखानिक्रमा । न्मुक्तिश्री रपि सैवसुद्धमनसा संसे व्यतांविश्वपाः ॥ ३ ॥ ※॥ इति श्रीगौडीपार्श्वजिनस्तोत्रं ॥ ※ ॥

॥ ※ ॥ आद्यः श्रीऋषभ स्ततोजितजिनः श्रीसंभवस्तीर्थकृत् । सुश्रीमान भिनंदनश्च सुमतिः श्रीसद्मपद्मप्रभः । पृथ्वीकुक्षिभव सुपार्श्वजिनपस्तीर्थेशचं द्रप्रभः । सर्व्वज्ञः सुविधिर्जिनो मुनिमतः श्रीशीतलःसौम्यदृक् ॥ १ ॥ श्रेयांस प्रभुवासुपुज्य विमला नंतेश धर्म्मेश्वराः । शांतिः कुंथु रर स्ततो जितरिपु र्मल्लि र्जिनःसुव्रतः। अर्हंतौ नमि नेमिशुद्धमुनिपौ विश्वत्रयेविश्रुतौ । श्रीमत्पार्श्वजिनः प्रसिद्धमहिमा श्रीवर्द्धमानः प्रभुः ॥ २ ॥ एते श्रीजिनपुङ्गवाः परमचिद्रूपाश्च तुर्विंशति । र्निश्शेषोत्तम भव्यजंतुहृदयां भोजप्रबोधोद्यताः । वंद्यन्ते सुरवृन्दवं द्यविंशदश्लोकव्रजानिर्भय । श्रीसंपत्तिनिवास विक्रमपुरेसद्भक्तितः प्रत्यहं ॥ ३ ॥

॥※॥ इति चतुर्विंशति जिनस्तवनम् ॥ ※ ॥ ॥※॥ ॥ ※ ॥

---

## ॥ ※ ॥ अथ मङ्गलाष्टकं लिख्यते ॥ ※ ॥

॥ ※ ॥ श्रीमन्नम्र सुरासुरेन्द्रमुकुट प्रद्योतिरत्नप्रभा । भास्वत्पादनखेन्दव प्रवचनां भोधौ व्यवस्थायिनः । ये सर्वे जिनसिद्धसूरिसुगता स्ते पाठकासाधवः स्तुत्या योगिजनैश्च पंचगुरवः कुर्वंतु मे मङ्गलं ॥ १ ॥ सम्यग्दर्शनबोधवृत्तमम लं रत्नत्रयं पावनं । मुक्तिश्रीनगरायनं जिनपतेः स्वर्ग्गापवर्ग्गप्रदः । धर्म्मःसू क्तिसुधाश्च चैत्यमखिलं जैनालयं श्र्यालयं । प्रोक्तंतत्त्रिविधं चतुर्विध ममी कुर्वं

तुमे मङ्गलं ॥ २ ॥ नाभेयादिजिनाधिपा स्त्रिभुवने ख्याताश्चतुर्विंशतिः । श्री मन्तो भरतेश्वरप्रभृतयो येचक्रिणो द्वादश । ये विष्णु प्रतिविष्णु लाङ्गलधराः समाधिकाविंशती । त्रैलोक्ये भयदा त्रिषष्टिपुरुषाः कुर्वंतु मे मङ्गलं ॥ ३ ॥ कैलाशे वृषभस्य निर्वृतिमही वीरस्य पावापुरी। चंपायां वसुपूज्य सज्जिनपतेः। सम्मेदशैलेर्हतां । शेषाणामपि चोर्जयन्तशिखरे नेमीश्वरस्यार्हतो । निर्वाणा विनयः प्रसिद्धविभवाः कुर्वंतु मेमङ्गलं ॥ ४ ॥ ज्योति र्व्यंतर भावनामरगृहे मेरौकुलाद्रौस्थिता । जंबू शाल्मलि चैत्यशाखिषु तथा वक्षार रूप्यादिषु । इक्ष्वाकारगिरौच कुंडलनगे द्वीपेच नंदीश्वरे । शैलेयेमनुजोत्तरे जिनगृहाः कुर्वं तु मे मङ्गलं ॥५॥ यो गर्भावतरोपिजयत्यर्हतां जन्माभिषेकोत्सवे। योजातः परिनिक्रमे यचभवो यःकेवलज्ञानभाक् । यः कैवल्यपुरप्रवेश महिमासंभावितः स्वर्गिभिः कल्याणानिच तानिपंचसततं कुर्वंतुमे मंगलं ॥६॥ येपंचौषधिऋद्धयः श्रुततपो ऋद्धिंगताः पंचये । येचाष्टांगमहानिमित्तकुशला येष्टौविधाचारणा । पंचज्ञानधराश्च येपिवलिनो ये बुद्धि ऋद्धीश्वरा । सतेते सकलाश्च ते गण भृताः कुर्वंतुमे मङ्गलं ॥ ७ ॥ देव्याश्चाष्ट जयादिका द्विगुणिता विद्या दिका देवता ॥ श्रीतीर्थंकर मातृकाश्च जनका यक्षाश्च यक्षीश्वराः । द्वात्रिंश तत्रिदशा ग्रहा निधिसुरा दिक्कन्यकाश्चाष्टधा । दिक्पाला दश इत्यमीसुरगणाः कुर्वंतु मे मङ्गलं ॥ ८ ॥ इत्थं श्रीजिनमङ्गलाष्टकमिदं कल्याण कालेर्हतां । पूर्वाण्हेपि महोत्सवेपि सततं श्रीसौख्यसंपत्करं । ये शृण्वंति पठंति तैश्च मनुजै र्धर्मार्थकामान्विता । लक्ष्मीराश्रयते विपायरहिताः कुर्वंतु मे मङ्गलं॥९॥

॥ इति श्रीमङ्गलाष्टकं संपूर्णम् ॥ ॐ ॥ ॥ ॐ ॥ ॥ ॐ ॥

## ॥ ॐ ॥ अथ परमात्मास्तोत्रः ॥ ॐ ॥

॥ शिवं शुद्ध बुद्धं परं विश्वनाथं । नदेवं नवंधु र्नकर्म नकर्त्ता । नअंगं न संगं नइच्छा नकामं । चिदानन्दरूपं नमोवीतरागं ॥१ ॥ नवंधो नमोक्षो नरा गादिलोकं । नजोगं नभोगं नव्याधि र्नशोकं । नक्रोधं नमानं नमाया नलोभं (चि०) ॥२॥ नहस्तौ नपादौ नघ्राणं नजिव्हा । नचक्षु र्नकर्णं नवक्त्रं ननि द्रा । नस्वादं नखेदं नवर्णं नमुद्रा । (चि०) ॥ ३ ॥ नजन्मं नमृत्यु नमोहं

नचिंता । नकुलूट् नन्नीतं नकष्यं नतुंदा । नस्वामी नन्नृत्यं नदेवो नमर्त्या । चि० ॥ त्रिदंभे त्रिखंभे हरे विश्वव्यापं । ऋषीकेश विध्वंशकर्म्मारिजालं । नपुण्यं नपापं नअक्ष्या नप्राणं । ( चि० ) ॥५॥ नबाल्यं नवृद्ध नविद्वि नमूढा । नबेद्यं नन्नेद्यं नमूर्त्ति नमीहा । नकृष्णं नशुक्लं नमोहं नतंद्रा । ( चि० ) ॥६॥ नआद्यं नमध्यं नमंत्यं नमन्या । नद्रव्यं नक्षेत्रं नदृष्टौ नन्नव्या । नगुर्वो न शिष्यो नआद्यो नदीनं ॥ ( चि० ) ॥७॥ इदंज्ञानरूपं स्वयंतत्त्ववेदी । नपूर्णां नशून्यं सचैतन्यरूपं । अन्योन्निन्निणं नपरमार्थमेकं । ( चि० ) ॥८॥ आत्मारामगुणाकरं गुणनिधि श्चैतन्यरत्नाकरं । सर्वेन्नूतगतागते सुखदुख ज्ञातात्वया सर्वगं । त्रैलोक्याधिपत्ति स्वयंस्वमनसाध्यायंति योगेश्वराः । वंदे तंद्दरिवंश हर्षहृदयं श्रीमान न्नूदर्च्युतः ॥ ए ॥ ※ ॥ इति श्रीपरमात्मास्तोत्रं ॥ ※ ॥

---

## ॥ ※ ॥ अथ नमस्कारस्तोत्र. ॥ ※ ॥

॥ ※ ॥ दर्शनं देवदेवस्य । दर्शनं पापनासनं । दर्शनं स्वर्गसोपानं । दर्शनं मोक्षसाधनं ॥ १ ॥ दर्शनेन जिनेंद्राणां । साधूनां वंदनेनच । नतिष्ठति चिरं पापं । छिद्रहस्ते यथोदकं ॥ २ ॥ दर्शनं जिनसूर्यस्य । संसारध्वांतनाशनं । बोधनंचित्तपद्मस्य । समस्तार्थप्रकाशकं ॥ ३ ॥ दर्शनं जिनचंद्रस्य । सद्धर्म्मामृतवर्षणं । जन्मदाघविनासाय । वृंहणंसुखवारिधेः ॥ ४ ॥ जिनेन्नक्ति जिनेन्नक्ति । जिनेन्नक्ति दिनेदिने । सदामेस्तु सदामेस्तु । सदामेस्तु न्नवे न्नवे ॥ ५ ॥ नहित्राता नहित्राता । नहित्राता जगत्रये । वीतरागसमोदेवो । न न्नूतो न न्नविस्यति ॥ ६ ॥ अन्यथाशरणं नास्ति । त्वमेवशरणं मम । तस्मात् सर्वप्रयत्नेन । रक्षरक्ष जिनेश्वर ॥ ७ ॥ वीतरागं मुखंदृष्ट्वा । पद्मरागसमप्रन्नं । नैकजन्म कृतंपापं । दर्शनेन विनश्यति ॥ ८ ॥ अर्हंतो मंगलं नित्यं सिद्धाजगतिमंगलं । मंगलंसाधवोमुख्यं । धर्म्मःसर्वत्रमंगलं ॥ ए ॥ लोकोत्तमाइहार्हतः । सिद्धालोकोत्तमाः सदा । लोकोत्तमोयतीशानां । धर्मोलोकोत्तमोर्हतां ॥ १० ॥ शरणं सर्वदार्हतः । सिद्धाशरणमंगलां । साधवः शरणं लोके । धर्म्मशरणमर्हतां ॥ ११ ॥ इति श्रीनमस्कारस्तोत्रं संपूर्णम् ॥ ※ ॥

---

## ॥※॥ अथ ऋषिमंमल स्तोत्र ॥※॥

॥※॥ आद्यंताक्षरसंलक्ष । मक्षरंवाप्ययत्स्थितं । अग्निज्वाला समंना द । बिंडरेखा समन्वितं ॥ १ ॥ अग्निज्वालासमाक्रांतं । मनोमलविशोधकं देदीप्यमानं हृत्पद्मे । तत्पदं नौमि निर्मलं ॥ २ ॥ अर्हं मित्यक्षरंब्रह्म । वाच कंपरमेष्टिनः । सिद्धचक्रस्य सद्बीजं । सर्वतः प्रणिदधमहे ॥ ३ ॥ ॐ नमो र्हद्भ्य ईशेभ्यः ॐ सिद्धेभ्योनमोनमः । ॐनमःसर्वसूरिभ्यः । उपाध्यायेभ्यः ॐ नमः ॥ ४ ॥ ॐ नमः सर्वसाधुभ्यः । ॐ ज्ञानेभ्योनमोनमः । ॐ नमः स्तत्त्वदृष्टिभ्य । श्चारित्रेभ्यस्तु ॐ नमः ॥ ५ ॥ श्रेयसेस्तु श्रियेस्त्वेत । द र्हदाद्यष्टकंशुभ्रं । स्थानेष्वष्टसुविन्यस्तं । पृथग्बीजसमन्वितं ॥ ६ ॥आद्यं पदंशिखांरक्ष । त्परंरक्षेतुमस्तकं । तृतीयं रक्षेन्नेत्रेद्वे । तुर्यंरक्षेचनासिकां ॥७॥ पंचमंतु मुखंरक्षेत् । षष्टंरक्षेचघंटिकां । नाभ्यंतंसप्तमंरक्षे । द्रक्षेत्पादांतमष्टमं ॥ ८ ॥ पूर्वप्रणवतः सांतः । सरेफोद्व्यब्धिपंचषान् । सप्ताष्टदशसूर्यांकान् । श्रितोबिंडस्वरान्पृथक् ॥ ए ॥ पूज्यनामाक्षराआद्याः । पंचातोज्ञानदर्शन । श्चारित्रेभ्यो नमो मध्ये । र्ह्रीं सांतह समलंकृतः ॥ १० ॥ ※ ॥ ॐ । र्ह्रां । र्ह्रीं । र्ह्रुं । र्ह्रूं । र्ह्रें । र्ह्रैं । र्ह्रौं । र्ह्रः । असिआउसा ज्ञानदर्शनचारित्रेभ्यो नमः ॥ ※ ॥ जंबूवृक्षधरोद्वीपः । क्षारोदधिसमावृतः । अर्हदाद्यष्टकेरष्ट । काष्टाधिष्टेरलंकृतः ॥ ११ ॥ तन्मध्य संगतोमेरुः । कूटलक्षै रलंकृतः । उच्चै रुच्चैस्तरस्तार । स्तारामंमलमंमितः ॥ १२ ॥ तस्योपरिसकारांतं । बीजम ध्यास्यसर्वगं । नमामि बिंबमार्हत्यं । ललाटस्थं निरंजनं ॥ १३ ॥ अक्षयं निर्मलंशांतं । बहुलं जाड्यतोज्झितं । निरीहं निरहंकारं । सारं सारतरंघ नं ॥ १४ ॥ अनुद्धतं शुभ्रं स्फीतं । सात्त्विकं राजसंमतं । तामसं चिर संबुद्धं । तैजसंशर्वरीसमं ॥ १५ ॥ साकारंच निराकारं । सरसं विरसंपरं परापरं परातीतं । परंपर परापरं ॥ १६ ॥ एकवर्णं द्विवर्णंच । त्रिवर्णं तुर्यवर्णकं । पंचवर्णं महावर्णं । सपरंच परापरं ॥ १७ ॥ सकलं निष्कलं तुष्टं । निर्वृतं भ्रांतिवर्जितं । निरंजनं निराकारं । निर्लेपं वीतसंश्रयं ॥१८॥ ईश्वरं ब्रह्मसंबुद्धं । बुद्धं सिद्धं मतंगुरु । ज्योतीरूपं महादेवं । लोकालोक प्रकाशकं ॥ १ए ॥ अर्हदाख्यस्तु वर्णांतः । सरेफोबिंडमंमितः । तुर्यस्वरस

मायुक्तो । वज्रधानादमालितः ॥ २० ॥ अस्मिन्बीजे स्थिताः सर्वे । वृष भाद्याजिनोत्तमाः । वर्णैर्निजैर्निजैर्युक्ता । ध्यातव्या स्तत्रसंगताः ॥ २१ ॥ नादश्चंद्रसमाकारो । विंदुर्नीलसमप्रभः । कलारुणसमासांतः । स्वर्णाभः सर्व तोमुखः ॥ २२ ॥ शिरःसंलीन ईकारो । विनीलोवर्णतः स्मृतः । वर्णानुसारसं लीनं । तीर्थकृन्मंमलंस्तुमः ॥ २३ ॥ चंद्रप्रभ पुष्पदंतौ । नादस्थितिसमा श्रितौ । विंदुमध्यगतौनेमि । सुव्रतौ जिनसत्तमौ ॥२४॥ पद्मप्रभवासुपूज्यौ । कलापदमधिष्ठितौ । शिरईस्थितिसंलीनौ । पार्श्वमल्लीजिनेश्वरौ । ॥ २५ ॥ शेषास्तीर्थंकृतःसर्वे । हरस्थाने नियोजिताः । मायाबीजाक्षरंप्राता । श्चतुर्विं शतिरर्हतां ॥ २६ ॥ गतरागद्वेषमोहाः । सर्वपापविवर्जिताः । सर्वदाः सर्व कालेषु । ते भवंतु जिनोत्तमाः ॥ २७ ॥ देवदेवस्ययश्चक्रं । तस्य चक्रस्य या विभा । तयाच्छादित सर्वाङ्गं । मामांहिनस्तु भाकिनी ॥ २८ ॥ देवदेवस्य० । मामांहिनस्तु राकिनी ॥ २९ ॥ देवदे० । मामांहिनस्तु लाकिनी ॥ ३० ॥ देव० । मामांहिनस्तु काकिनी ॥ ३१ ॥ देवदे० । मामांहिनस्तु शाकिनी ॥ ३२ ॥ देव० । मामांहिनस्तुहाकिनी ॥ ३३ ॥ देव० । मामांहिनस्तु याकिनी ॥ ३४ ॥ देव० । मामांहिंसंतुपन्नगाः ॥३५॥ देव० । मामांहिं संतु हस्तिनः ॥ ३६ ॥ देवदे० । मामांहिंसंतु राक्षसाः ॥ ३७ ॥ देव० । मामांहिंसंतुवन्हयः ॥ ३८ ॥ देव० । मामांहिंसंतु सिंहकाः ॥ ३९ ॥ देव० । मामांहिंसंतु डर्जना. ॥ ४० ॥ देव । मामांहिंसंतु भूमिपाः ॥ ४१ ॥ श्री गौतमस्ययामुद्रा । तस्यायाभुविलब्धयः । ताभि रभ्युद्यतज्योति । रर्हसर्व निधीश्वराः ॥ ४२ ॥ पातालवासिनो देवा । देवाभूपीठि वासिनः । स्वर्वा सिनोपि ये देवाः । सर्वे रक्षंतु मामितः ॥ ४३ ॥ येऽवधिलब्धयो येतु । परमावधिलब्धयः । ते सर्वे मुनयोदेवाः । मांसं रक्षंतु सर्वदा ॥ ४४ ॥ डु र्जनाभूतवेत्तालाः । पिशाचामुजलास्तथा । ते सर्वे प्युपशाम्यंतु । देवदेव प्रभावतः ॥ ४५ ॥ ॐ ह्रीं श्रीश्च धृति लक्ष्मी । गौरी चंमी सरस्वती । जयांबा विजयानित्या । क्लिन्ना जिता मदद्रवा ॥ ४६ ॥ कामांगा कामबा णाच । सानंदानंदमालिनी । माया मायाविनी रौद्री । कला काली कलि प्रिया ॥ ४७ ॥ एताः सर्वा महादेव्यो । वर्त्ततेयाजगत्त्रये । मह्यंसर्वाःप्रय छंतु । कांतिंकीर्त्तिंधृतिंमतिं ॥ ४८ ॥ दिव्यो गोप्यः सङः प्राप्यः । श्रीऋषि

मंमलस्तवः । नावितस्तीर्थनाथेन । जगत्त्राण कृतेनघः ॥ ४९ ॥ रणेराज कुलेवन्हौ । जलेडुर्गे गजे हरौ । श्मशाने विपिने घोरे । स्मृतो रक्षति मानवं ॥ ५० ॥ राज्यभ्रष्टा निजं राज्यं । पदभ्रष्टा निजं पदं । लक्ष्मी भ्रष्टानिजां लक्ष्मीं । प्राप्नुवंति न संशयः ॥५१॥ नार्यार्थी लनते नार्यां । पुत्रार्थी लनते सुतं । वित्तार्थी लनते वित्तं । नरःस्मरण मात्रतः ॥ ५२ ॥ स्वर्णेरूप्ये पटेकांस्ये । लिखित्वा यस्तुपूजयेत् । तस्यैवाष्टमहासिद्धि । गृहे वसति शाश्वती ॥ ५३ ॥ नूर्यपत्रेलिखित्वेदं । गलके मूर्द्धनि वा नुजं । धारितं सर्वदा दिव्यं । सर्वनीति विनाशकं ॥ ५४ ॥ नूतैःप्रेतैर्ग्रहैर्यक्षैः । पिशाचैर्मुद्गलैर्मलैः । वातपित्तकफोद्रेके । मुच्यते नात्रसंशयः ॥५५॥ नूर्नुवःस्व स्त्रयीपीठः । वर्त्तिनःशाश्वताजिनः । तैःस्तुते वंदिते दृष्टे । यत्फलंतत्फलंश्रुतौ ॥५६॥एतद्गोप्यं महास्तोत्रं । नदेयं यस्यकस्यचित् । मिथ्यात्ववासिने दत्ते । वालहत्यापदेपदे ॥ ५७ आचाम्लादितपःकृत्वा । पूजयित्वा जिनावली । अष्टसाहस्रिको जापः । कार्यस्तत्सिद्धिहेतवे ॥ ५८ ॥ शतमष्टोत्तरंप्रात । र्येपठंति दिनेदिने । तेपांनव्याधयोदेहे । प्रनवंति नचापदः ॥ ५९ ॥ अष्टमासावधिंयावत् । प्रातःप्रातस्तुयःपठेत् । स्तोत्रमेतन्महातेजो । जिनविंबं स पश्यति ॥ ६० ॥ दृष्टे सत्यर्हतोविंबे । नवेसतमके ध्रुवं । पदंप्राप्नोति शुद्धात्मा । परमानंदनंदितः ॥ ६१ ॥ विश्ववंद्यो नवेध्याता । कल्याणानि चसोश्नुते । गत्वास्थानंपरं सोपि । नूयस्तु न निवर्त्तते ॥ ६२ ॥ इदं स्तोत्रं महास्तोत्रं । स्तुतीनामुत्तमंपरं । पठना त्स्मरणा ज्जापा । ल्लन्यते पदमुत्तमं ॥ ६३ ॥ इतिश्रीऋपिमंमलस्तोत्रं ॥ ※ ॥ क्षेपक श्लोकान्निराकृत्यमूलयं त्रकल्पानुसारेण । लिखितं । गणिः श्रीक्षमाकल्याणोपाध्यायैः । तस्योपरि मयापि लिखितं इदं स्तोत्रं ॥ ※ ॥ ॥ ※ ॥ ॥ ※ ॥

---

## ॥※॥ अथ नक्तामरस्तोत्र ॥※॥

॥※॥ नक्तामरप्रणत मौलिमणिप्रनाणा । मुद्द्योतिकं दलितपापत मोवितानं । सम्यक् प्रणम्य जिनपादयुगंयुगादा । वालंवनंनवजलेपततांज नानां ॥१॥ यः संस्तुतःसकल वाङ्मयतत्ववोधा । दुद्भूतवुद्धिपटुनिःसुरलोक नाथैः। स्तोत्रैर्जगत्त्रितय चित्तहरैरुदारैः । स्तोष्ये किलाहमपितं प्रथमंजिनेंद्रं

॥ २ ॥ युग्मं । बुद्ध्याविनापि विबुधार्च्चितपादपीठ । स्तोतुं समुद्यतमति र्विग तत्रपोहं । बालंविहाय जलसंस्थित मिंदुबिंब । मन्यःक इछति जनः सह सायहीतुं ॥ ३ ॥ वक्तुंगुणानूगुणसमुद्र शशांक कांतान् । कस्तेक्षमः सुरगुरु प्रतिमोपि बुद्ध्या । कल्पांतकाल पवनोध्दतनक्रचक्रं । कोवातरीतुमलमंबुनि धिं भुजाभ्यां ॥ ४ ॥ सोहं तथापि तवभक्तिवशान्मुनीश । कर्तुंस्तवं विग तशक्तिरपि प्रवृत्तः । प्रीत्यात्मवीर्य मविचार्य मृगोमृगेंद्रं । नाभ्येति किं नि जशिशोः परिपालनार्थं ॥ ५ ॥ अल्पश्रुतं श्रुतवतं परिहासधाम । त्वद्भक्ति रेव मुखरीकुरुते बलान्मां । यत्कोकिलःकिलमधौमधुरंविरौति । तच्चारुचाम्र कलिकानिकरैकहेतु ॥ ६ ॥ त्वत्संस्तवेनभवसंततिसन्निवद्धं । पापंक्षणात्क्ष यमुपैति शरीरभाजां । आक्रांतलोकमलिनीलमशेषमाशु । सूर्यांशुभिन्न मि व शार्वरमंधकारं ॥ ७ ॥ मत्वेतिनाथतवसंस्तवनंमयेद । मारभ्यते तनुधि यापि तवप्रभावात् । चैतोहरिष्यतिसतां नलिनीदलेषु । मुक्ताफलद्युतिमुपैति ननूदबिंदुः ॥ ८ ॥ आस्तांतवस्तवनमस्तसमस्तदोषं । त्वत्संकथापि जगतां डुरितानिहंति । दूरे सहस्रकिरणः कुरुते प्रभैव । पद्माकरेषु जलजानिवि काशभांजि ॥ ९ ॥ नात्यद्भुतं भुवनभूषण भूतनाथ । भूतैर्गुणै र्भुविभवंत म भिष्टुवंतः ॥ तुल्या भवंति भवतो ननु तेन किंवा । भूत्याश्रितं य इहनात्म समंकरोति ॥ १० ॥ दृष्ट्वाभवंत मनिमेषविलोकनीयं । नान्यत्रतोषमुपयाति जगस्यचक्षुः । पीत्वापयः शशिकरद्युतिडुग्धसिंधोः । क्षारंजलंजलनिधे रसि तुंकःइछेत् ॥ ११ ॥ यैः शांतरागरुचिभिः परमाणभिस्त्वं । निर्म्मापितस्त्रिभु वनैक ललामभूत । स्तावंतएवखलुते प्यणवःपृथिव्यां । यत्तेसमानमपरंनहिरूप मस्ति ॥ १२ ॥ वक्त्रंक्वतेसुरनरोरगनेत्रहारि । निःश्शेषनिर्ज्जित जगत्त्रितयो पमानं । बिंबं कलंकमलिनं क्वनिशाकरस्य । यद्वासरे भवति पांडुपलाशक ल्पं ॥ १३ ॥ संपूर्णमंमलशशांककलाकलाप । शुभ्रागुणास्त्रिभुवनं तवलंघ यंति । ये संश्रितास्त्रिजगदीश्वरनाथमेकं । कस्तान्निवारयतिं संचरतोयथेष्टं ॥ १४ ॥ चित्रं किमत्रयदिते त्रिदशांगनाभि । र्नीतं मनागपिमनो नविकार मार्गं । कल्पांतकालमरुता चलिताचलेन । किंमंदराद्रिशिखरं चलितंकदा चित् ॥ १५ ॥ निर्धूमवर्त्ति रपवर्ज्जित तैलपूरः । कृत्स्नंजगत्त्रयमिदं प्रग टी करोषि । गम्यो न जातु मरुतां चलिता चलानां । दीपोपरस्त्वमसिना

थ जगत्प्रकाशः ॥ १६ ॥ नास्तं कदाचिदुपयासिनराहुगम्यः । स्पष्टी क
रोषि सहसायुगपज्जगंति । नांभोधरोदरनिरुद्धमहाप्रभावः । सूर्यातिशायिम
हमासि मुनींद्रलोके ॥ १७ ॥ नित्योदयं दलितमोहमहांधकारं । गम्यं न
राहुवदनस्य नवारिदानां । विभ्राजते तव मुखाब्जं मनल्पकांति । विद्योतय
जगद् पूर्वशशांकबिंबं ॥ १८ ॥ किं शर्वरीषु शशिनाह्नि विवस्वतावा ।
युष्मन्मुखेंदु दलितेषु तमस्सुनाथ । निष्पन्नशालिवनशालिनिजीवलोके । कार्य
कियज्जलधरैर्जलभारनम्रैः ॥ १९ ॥ ज्ञानंयथा त्वयि विभाति कृतावकाशं ।
नैवं तथा हरिहरादिषु नायकेषु । तेजःस्फु रन्मनिषु याति यथा महत्वं । नैवंतु
काचसकले किरणाकुलेपि ॥ २० ॥ मन्येवरं हरिहरादय एव दृष्टा । दृष्टे
षु येषु हृदयं त्वयि तोषमेति । किं वीक्षितेन भवताभुवियेन नान्यः । कश्चि
न्मनोहरतिनाथ भवांतरेपि ॥ २१ ॥ स्त्रीणांशतानिशतशो जनयंतिपुत्रान्
नान्यासुतं त्वदुपमं जननीप्रसूता । सर्वादिशोदधति भानि सहस्ररश्मिं । प्रा
च्येव दिग्जनयति स्फुरदंशुजालं ॥ २२ ॥ त्वामामनन्तिमुनयः परमं पुमांस ।
मादित्यवर्णममलं तमसःपुरस्तात् । त्वामेवसम्यगुपलभ्य जयन्ति मृत्यु । ना
न्यःशिवः शिवपदस्य मुनींद्रपन्थाः ॥२३॥ त्वामव्ययं विभु मचिंत्य मसंख्य
माद्यं । ब्रह्माण मीश्वर मनन्त मनङ्गकेतु । योगीश्वरं विदितयोग मनेक मेकं ।
ज्ञानस्वरूप ममलं प्रवदन्तिसन्तः॥ २४ ॥ बुद्धस्त्वमेव विबुधार्चितबुद्धिबोधा ।
त्वंशंकरोसि भुवनत्रय शंकरत्वात् । धातासिधीर शिवमार्ग विधेर्विधानात् । व्य
क्तं त्वमेव भगवन् पुरुषोत्तमोसि ॥ २५ ॥ तुभ्यं नम स्त्रिभुवनार्तिहराय नाथ ।
तुभ्यं नमः क्षितितलामलभूषणाय । तुभ्यं नम स्त्रि जगतः परमेश्वराय । तुभ्यं
नमो जिनभवो दधिशोषणाय ॥ २६ ॥ कोविस्मयोत्र यदि नामगुणैरशेषै ।
स्त्वं संश्रितो निरवकाशतया मुनीश । दोषैरुपात्त विबुधाश्रयजातगर्वैः । स्वप्नां
तरेपि न कदाचिदपीक्षितोसि ॥ २७ ॥ उच्चैरशोकतरुसंश्रितमुन्मयूखा । मा
भाति रूपममलं भवतो नितांन्तं । स्पष्टोल्लसत्किरणमस्ततमोवितानं । बिम्बं
रवेरिवपयोधरपार्श्ववर्ति ॥ २८ ॥ सिंहासने मणिमयूख शिखाविचित्रे । वि
भ्राजते तव वपुः कनकावदातं । बिम्बं वियद्विलसदंशुलतावितानं । तुङ्गो
दयाद्रिशिरसीव सहस्र रश्मेः ॥ २९ ॥ कुंदावदातचलचामरचारुशोभं । वि
भ्राजते तव वपुः कलधौतकांतं । उद्यच्छशांक शुचिनिर्झर वारिधार । मुच्चै

स्तटं सुरगिरेरिवशातकौम्नं ॥ ३० ॥ छत्रत्रयं तवविभाति शशांककांत । मुच्चैः स्थितंस्थगितभानुकरप्रतापं । मुक्ताफलप्रकरजालविवृद्धिशोभं । प्रख्यापयत् त्रिजगतः परमेश्वरत्वं ॥ ३१ ॥ उन्निद्रहेम नवपंकज पुंजकांति । पर्युल्लसन्नख मयूख शिखाभिरामौ । पादौ पदानि तव यत्र जिनेंद्रधत्तः । पद्मानि तत्र वि बुधाः परिकल्पयन्ति ॥ ३२ ॥ इत्थं तथा तव विभूति रभूज्जिनेंद्र । धर्म्मोप देशन विधौ न तथा परस्य ॥ यादृक् प्रभादिनकृतः प्रहतान्धकारा । तादृ क्कुतो ग्रहगणस्य विकाशिनोपि ॥ ३३॥ श्च्योतन्मदा विलविलोल कपोल मूल । मत्तभ्रमद्भ्रमरनाद विवृद्धकोपं । ऐरावताभमिभमुद्धत मापतन्तं । दृष्ट्वा भयं भवतिनोभवदाश्रितानां ॥३४ ॥ भिन्नेभकुंभ गलदुज्वल शोणिताक्त । मुक्ताफल प्रकरभूषित भूमिभागः । वद्धक्रमः क्रमगतं हरिणाधिपोपि । नाक्रा मति क्रमयुगाचलसंश्रितंते ॥ ३५ ॥ कल्पान्तकालपवनोद्धतवन्हिकल्पं । दावानलं ज्वलितमुज्ज्वलमुत्स्फुलिङ्गं । विश्वं जिघत्सुमिव सम्मुखमापतन्तं । त्वं नामकीर्त्तनजलं शमयत्यशेषं ॥ ३६ ॥ रक्तेक्षणं समदकोकिल कंठनीलं । क्रोधोद्धतं फणिनमुतफण मापतन्तं । आक्रामति क्रमयुगेन निरस्तशंकः । त्वन्नाम नागदमनी हृदि यस्य पुंसः ॥ ३७ ॥ वल्गत्तुरङ्ग गजगर्जित भीमना द । माजौबलं बलवता मपि भूपतीनां । उद्यद्दिवाकरमयूख शिखापविद्धं । त्वत्कीर्त्तनात्तमइवाशुभिदामुपैति ॥ ३८ ॥ कुन्ताग्रभिन्नगजशोणितवारिवा ह । वेगावतारतरणातुरयोधभीमे । युद्धे जयं विजितदुर्ज्जयजेयपक्षाः । त्व त्पादपंकजवनाश्रयिणो लभन्ते ॥३९॥ अंभोनिधौ क्षुभितभीषणनक्रचक्र । पाठीनपीठभयदोल्वणवाम्रवाग्नौ । रङ्गत्तरंगशिखरस्थितयानपात्रा । स्त्रासं विहायभवतः स्मरणाद्व्रजन्ति ॥ ४० ॥ उद्भूतभीषणजलोदरभार भुग्नाः । शौच्यांदशा मुपगताश्च्युतजीविताशाः । त्वत्पादपंकज रजोमृतदिग्धदेहा । म र्त्याभवन्ति मकरध्वज तुल्यरूपाः ॥ ४१ ॥आपादकंठमुरशृंखलवेष्टिताङ्गा । गाढं वृहन्निगडकोटिनिघृष्टजंघाः । त्वन्नाममंत्रमनिशं मनुजाः स्मरंन्तः । सद्यः स्वयं बिगत बंध भया भवन्ति ॥ ४२ ॥ मत्त द्विपेंद्र मृगराज दवानलाहि संग्रामवारिधि महोदरवन्धनोत्थं । तस्याशु नाशमुपयाति भयं भियेव । य स्तावकं स्तवमिमं मतिमानधीते ॥ ४३ ॥ स्तोत्रस्त्रजं तव जिनेंद्रगुणैर्निबद्धां। भक्त्या मया रुचिरवर्ण विचित्रपुष्पां । धत्तेजनो य इह कंठगतामजस्रं ।

तंमानतुंग मवशा समुपैति लक्ष्मीः ॥४४॥ इतिश्रीन्नक्तामरस्तोत्रंम् ॥२॥ ※॥

## ॥※॥ अथ कल्याणमंदिरस्तोत्र ॥ ※ ॥

॥ ※ ॥ कल्याणमन्दिर मुदारमवद्यभेदि । भीता भयप्रदमनिन्दित मंह पद्मं । संसारसागरनिमज्जदशेषजंतु । पोतायमानमन्निनम्यजिनेश्वरस्य॥१॥ यस्यस्वयं सुरगुरुर्गरिमांबुराशेः । स्तोत्रं सुविस्तृतमति र्नविन्नुर्विधातुं । तीर्थेश्व रस्य कमठस्मयधूमकेतो । स्तस्याहमेप किलसंस्तवनं करिष्ये ॥२॥ (युग्मं) सामान्यतोपि तव वर्णयितुं स्वरूप । मस्मादृशाः कथमधीश न्नवंतधीशाः । धृष्टोपि कोशिकशिशु र्यदिवादिवांधो । रूपं प्ररूपयति किं किलघर्म रश्मेः ॥ ॥३॥ मोहक्षया दनुन्नवन्नपि नाथमर्त्यो । नूनं गुणान् गुणयितुं न तव क्षमेत । कल्पान्तवातपयसः प्रकटोपि यस्मा । न्मीयेत केन जलधे र्ननु रत्नराशिः ॥४॥ अन्युद्यतोस्मि तवनाथ जडाशयोपि । कर्तुंस्तवं लसदसंख्य गुणाकर स्य । बालोपि किं ननिजबाहु युगं वितत्य । विस्तीर्णतां कथयति स्वधि यांबुराशेः ॥ ५ ॥ ये योगिनामपि न यांति गुणास्तवेश । वक्तुं कथं न्नवति तेषु ममावकाशः । जातातदेव मसमीक्षित कारितेयं । जल्पंति वा निजगि रा ननु पक्षिणोपि ॥ ६ ॥ आस्ताम चिंत्यमहिमा जिनसंस्तवस्ते । नामा पिपाति न्नवतो न्नवतो जगंति । तीव्रातपो पहतपांथ जनान्निदाघे । प्रीणा ति पद्मसरसः सरसोनिलोपि ॥ ७ ॥ हृद्वर्त्तिनि त्वयिविन्नो शिथलीन्नवंति । जंतो क्षणेन निवडाअपि कर्म्मबंधाः । सद्यन्नुजङ्गमया इवमध्यन्नाग । मन्यागते वनशिखंमिनिचंदनस्य ॥ ८ ॥ मुच्यंत एव मनुजाः सहसाजिनेंद्र । रोद्रै रुपद्रवशतै स्त्वयिवीक्षितेपि । गोस्वामिनि स्फुरिततेजसि दृष्टमात्रे । चौरै रिवाशुपशवः प्रपलायमानैः ॥ ९ ॥ त्वंतारको जिनकथं न्नविनां तएव । त्वा मुद्वहंति हृदयेन यदुत्तरंतः । यद्वादृति स्तरति यज्जल मेपनून । मंतर्गतस्यम रुतः सकिलानुन्नावः ॥ १० ॥ यस्मिन्हर प्रभृतयोपि हतप्रन्नावा । सोपि त्वया रतिपतिः क्षपितःक्षणेनः । विध्यापिता हुतन्नुजः पयसाथ येन । पीतं न किं तदपिदुर्द्धरवाडवेन ॥ ११ ॥ स्वामिण तुल्य गरिमाणमपिप्रपन्ना । स्त्वांजंतवः कथमहो हृदयेदधानाः । जन्मोदधिं लघुतरंत्यतिलाघवेन । चिं त्यो नहंतमहतां यदिवा प्रन्नाव ॥ १२ ॥ क्रोधस्त्वया यदि विन्नो प्रथमं

निरस्तो । ध्वस्तास्तदावतकथं किलकर्म्मचौराः । प्रोघरयमुत्र यदिवा शि शिरापिलोके । नीलद्रुमानि विपिनानि न किं हिमानी ॥ १३ ॥ त्वां योगि नो जिन सदा परमात्मरूप । मन्वेषयंतिहृदयां बुजकोशदेशे । पूतस्य नि र्मलरुचेर्यदिवा किमन्य । दक्षस्य संन्नविपदं ननुकर्णिकाया ॥ १४ ॥ ध्याना जिनेश न्नवतो न्नविनः क्षणेन । देहंविहाय परमात्मदशां व्रजंति । तीव्रान लाउपलन्नाव मुपास्यलोके । चामीकरत्वमचिरा दिवधातुन्नेदाः ॥ १५ ॥ अन्त सदैव जिन यस्य विन्नाव्यसेत्वं । न्नव्यै कथं तदपि नाशयसे शरीरं । एतत्स्वरूप मथ मध्यविवर्त्तिनोहि । यद्विग्रहं प्रसमयंति महानुन्नावाः ॥१६॥ आत्मामनीषि निरयं त्वदन्नेदबुध्द्या । ध्यातोजिनेंद्रन्नवतीह न्नवत्प्रन्नावः । पानीयमप्य मृतमित्यनु चिंत्यमानं । किं नामनो विषविकार मपाकरोति॥१७॥ त्वामेव वीततमसं परवादिनोपि । नूनंविन्नो हरिहरादि धियाप्रपन्नाः । किंका चकामलिन्निरी शसितोपि शंखो । नो गृह्यते विविधवर्ण विपर्ययेण ॥१८॥ धर्म्मोंपदेशसमये सविधानुन्नावा । दास्तांजनोन्नवति ते तरुरप्यशोक । अ न्युद्गते दिनपतौ समहीरुहोपि । किंवा विबोधमुपयाति न जीवलोकः॥१९॥ चित्रंविन्नो कथमवाङ्मुखवृंतमेव । विष्वक्पतत्यविरलासुरपुष्पवृष्टिः । त्वद्गो चरे सुमनसां यदिवामुनीश । गच्छंति नून मधएवहि वंधनानि ॥ २० ॥ स्थाने गन्नीरहृदयोदधिसंन्नवायाः । पीयूषतां तव गिरः समुदीरयंति । पीत्वा यतः परमसंमदसंगन्नाजो । न्नव्याव्रजंति तरसाप्यजरामरत्वं ॥ २१ ॥ स्वा मिन् सुदूरमवनम्य समुत्पतन्तो । मन्ये वदंति सुचयः सुरचामरौघाः । यस्मै नतिं विदधते मुनिपुंगवाय । ते नूनमूर्ध्वगतयः खलु शुद्धन्नावाः ॥ २२ ॥ श्यामं गन्नीरगिर मुज्वलहेमरत्न । सिंहासनस्थमिहन्नव्य शिखण्डिनस्तां । आलोकयन्ति रन्नसेन नदन्तमुच्चै । श्चामीकराद्रिशिरसी वनवांबुवाहं ॥२३॥ उद्गछता तवशाति द्युतिमंमलेन । लुप्तच्छद छविरशोक तरुर्बन्नूव । सानिध्यतो पि यदिवा तव वीतराग । निरागतां व्रजति कोन सचेतनोपि ॥ २४ ॥ न्नो न्नो प्रमादमवधूय न्नजध्वमेन । मागत्यनिर्वृतिपुरी प्रति सार्थवाहं । एतन्नि वेदयति देव जगत्त्रयाय । मन्ये नदन्नन्निनन्नः सुरडुंडुन्निस्ते ॥ २५ ॥ उद्यो ति तेषु न्नवता न्नुवनेषु नाथ । तारान्वितोविधुरयं विहताधिकारः । मुक्ताक लापकलितो छ्वसितातपत्र । व्याजात्त्रिधाधृततनुर्ध्रुवमन्न्युपेतः॥ २६ ॥ स्वेन

प्रपूरित जगत्त्रय पिंमितेन । कांति प्रताप यशसामिव संचयेन । माणिक्य हे
म रजत प्रविनिर्मितेन । शालत्रयेणभगवन्नभितोविभासि ॥ २७ ॥ दिव्य
स्रजो जिन नमत्त्रिदशाधिपाना । मुत्सृज्यरत्नरचितानपि मौलिबंधान् । पा
दौश्रयंति भवतो यदिवा परत्र । त्वत्सङ्गमे सुमनसो नरमन्तएव ॥ २८ ॥
त्वं नाथ जन्म जलधेर्विपराङ्मुखोपि । यत्तारयस्य सुमतो निजपृष्ठलग्नान् ।
युक्तंहि पार्थिव निपस्य सतस्तवैव । चित्रंविभो यदसिकर्म विपाकशून्यः ॥२९॥
विश्वेश्वरोपि जनपालक दुर्गतस्त्वं । किंवाक्षर प्रकृतिरप्य लिपिः त्वमीश ।
अज्ञानवत्यपिसदैव कथंचदेव । ज्ञानंत्वयि स्फुरति विश्वविकाशहेतुः॥३०॥
प्राग्भार संभृतनभांसि रजांसिरोषा । दुत्थापितानि कमठेन शठेन यानि ।
गायापिते स्तवननाथ हता हताशो । ग्रस्तस्त्वमीभि रयमेव परंदुरात्मा ॥३१॥
यद्गर्जदूर्जित घनौघमदभ्रभीम । भ्रश्यत्तडिन्मुशल मांसलघोरधारं । दैत्येन
मुक्त मथदुस्तरवारिदध्रे । तेनैवतस्य जिनदुस्तर वारिकृत्यं ॥ ३२ ॥ ध्वस्तोर्ध्व
केशविकृताकृतिमर्त्यमुंम । प्रालंवभृद्भयदवक्त्रविनिर्यदग्निः । प्रेतव्रजः प्रतिभ
वंतमपीरितोयः । सोस्याभवत्प्रतिभवं भवदुःखहेतुः ॥ ३३ ॥ धन्यास्त एव
भुवनाधिप ये त्रिसंध्य । माराधयंति विधिवद्विधतान्यकृत्याः । भक्त्युल्लसत्पु
लकपक्ष्मलदेहदेशाः । पादद्वयं तवविभो भुविजन्मभाजः ॥ ३४ ॥ अस्मि
णपार भववारिनिधौ मुनीश । मन्येन मे श्रवणगोचरतां गतोसि । आक
र्णितेतु तवगोत्र पवित्रमंत्रे । किंवा विपद्विषधरी सविधंसमेति ॥ ३५ ॥ ज
न्मांतरेपि तव पादयुगं नदेव । मन्ये मया महित मीहित दानदक्षं । तेनेह
जन्मनि मुनीश पराभवानां । जातो निकेतन महं मथिता शयानां ॥ ३६ ॥
नूनं नमोहतिमिरा वृतलोचनेन । पूर्वविभो सकृदपि प्रविलोकितोसि । मर्मा
विधो विधुरयंति हिमामनर्थाः । प्रोद्यत्प्रबंधगतयः कथमन्यथैते ॥ ३७ ॥
आकर्णितोपि महितोपि निरीक्षितोपि । नूनं नचेतसि मया विधृतोसिभक्त्या।
जातोस्मि तेन जनबांधवदुःखपात्रं । यस्मात्क्रियाः प्रतिफलंति नभावशून्याः
॥ ३८ ॥ त्वं नाथ दुःखिजनवत्सल हे शरण्य । कारुण्यपुण्यवसते वशिनांवरे
ण्य । भक्त्यानते मयि महेश दयांविधाय । दुःखांकुरोद्दलन तत्परतां विधेहि
॥ ३९ ॥ निःसंख्यसारशरणंशरणंशरण्य । मासाद्यसादितरिपुप्रथितावदातं ।

त्वत्पादपंकजमपि प्रणिधानवंध्यो । वध्योस्मिचेद्भुवनपावनहाहतोस्मि ॥४०॥ देवेन्द्रवंद्यविदिताखिलवस्तुसार । संसारतारकविभोभुवनाधिनाथ । त्रायस्व देव करुणा ह्रदिमांपुनीहि । सीदंत मद्यभयद व्यसनांवुराशे ॥ ४१ ॥ यद्यस्तिनाथ भवदंघ्रि सरोरुहाणां । भक्तेःफलं किमपिसंतत संचितायाः । तन्मे त्वदेक शरणस्य शरण्यभूयाः । स्वामीत्वमेव भुवनेत्र भवांतरेपि ॥ ४२ ॥ इत्थंसमाहितधियो विधिवज्जिनेंद्र । सांद्रोल्लसत्पुलक कंचुकितांगभागाः । त्वद्बिंवनिर्म्मल मुखांवुजवद्धलक्ष्या । येसंस्तवंतवविभो रचयंतिभव्याः ॥ ४३ ॥ जननयनकुमुदचंद्र । प्रभासुराः स्वर्गसंपदोभुक्ता । ते विगलितमलनिचया । अचिरान्मोक्षं प्रपद्यंते ॥ ४४ ॥※॥ इति कल्याणमंदिरस्तोत्रं संपूर्णम् ॥※॥

## ॥※॥ अथ सेत्रुंजरास ॥※॥

॥ ※ ॥ श्रीरिसहेसरपायनमी । आणीमनआणंद । रासभणुं रलियामणो । सेत्रुंजैनोसुखकंद ॥ १ ॥ संवतच्यारसतोतरै । हुवाधनेसरसूर । तिण सेत्रुंजमहातमकियो । शिलादित्यहजूर ॥ २ ॥ वीरजिणंदसमोसस्या । सेत्रुंजैऊपरजेम । इन्द्रादिक आगलिकह्यो । सेत्रुंजमाहातमएम ॥ ३ ॥ सेत्रुंजतीरथ सारिषो । नहीछै तीरथकोय । स्वर्गमृत्यु पातालमैं । तीरथसगलांजोय ॥ ४ ॥ नामैनवनिधिसंपजै । दीठांडरितपुलाय । भेटंतां भवभयटलै । सेवंतांसुखथाय ॥ ५ ॥ जंबूनामैदीपए । दक्षिणभरतमझार । सोरठदेससुहामणो । तिहांछै तीरथसार ॥ ६ ॥ ※ ॥ ढालपहिलीः रामगिरी ॥ ※ ॥

॥ सेत्रुंजोनैंश्रीपुंडरीक । सिद्धक्षेत्रकहुं तहतीक । विमलाचलनेकरूं परणाम । एसेत्रुंजैना इकवीसनांम ॥ १ ॥ सुरगिरिनें महागिरि पुन्यरास । श्रीपद पर्वत इंद्रप्रकास । महातीरथपूरवेसुखकांम ए० ॥ २ ॥ सासतोपर्वतनें दृढशक्ति । मुक्तिनिलो तिणकीजैभक्ति । पुष्फदंत महापदम सुठाम । ए० ॥ ३ ॥ पृथ्वीपीठ सुभद्र कैलाश । पातालमूल अकर्मकतास । सर्वकाम कीजैं गुणग्राम । ए० ॥ ४ ॥ श्रीसेत्रुंजैनाइकवीसनाम । जपैजवेठाअपणैठांम । सेत्रुंजजात्रानोफल लहै । महावीरभगवंतइमकहै ॥ ५ ॥※॥ दुहा ॥※॥ सेत्रुंजोपहिलैआरैं । असीजोयणपरमांण । पिहुलो मूल ऊंचपण । छवीसजोयणजांण ॥१॥ सित्तरजोयणजाणवो । वीजे आरैविशाल । वीसजोयणऊंचोकह्यो । मुझवंदणा

त्रिकाल ॥ २ ॥ साठजोयणतीजैअरे । पिहुलो तीरथराय । सोलजोयण ऊंचोसही । ध्यानधरूं चितलाय ॥ ३ ॥ पचासजोयण पिहुलपण । चोथे अरे मझार । ऊंचो दसजोयण अचल । नितप्रणमें नरनार ॥ ४ ॥ बार जोयण पंचम अरें । मूलतणें विशतार । दोजोयण ऊंचोअछे । सेत्रुंजतीरथ सार ॥ ५ ॥ सातहाथ छठे अरें । पिहुलो परवतएह । ऊंचोहोस्ये सउप नुप । सासतोतीरथएह ॥ ६ ॥॥ ढाल ॥ जिनवरसुं मेरोमनलीणो ॥॥ केवलन्यानी प्रमुखतीर्थंकर । अनंतसीधाइणठामेरे । अनंतवली सीझसे इणठामें । तिणकरुं नितपरणामेरे ॥१॥ सेत्रुंजैसाधुअनंतासीधा । सीझसीवलीय अनंतरे । जिणसेत्रुंजतीरथ नहीभेट्यो । तेगरभावासकहंतरे ॥ सेत्रुं० ॥२॥ फागुणसुदि आठमनें दिवसे । रिषभदेव सुखकाररे । रायणरूंख समोसर्यास्वामी । पूरवनिनाणूं वाररे । से० ॥ ३ ॥ भरतपुत्रचैत्रीपूनमदिन । इणसेत्रुंज गिरिआयरे । पांचकोडिसूं पुंडरीकसीधा । तिण पुंडरीक कहायरे । से०॥ ४ ॥ नमि विनमि राजाविद्याधर । वेवेकोडिसंघातरे । फागुणसुदिदशमी दिनसीधा । तिणप्रणमुंपरभातरे । से० ॥ ५ ॥ चैत्रमासवदि चउदसनेंदिन नमिपुत्री चौसठिरे । अणसणकरि सेत्रुंजेगिर ऊपर । एसझसीधा एकठरे । से० ॥ ६ ॥ पोतरा प्रथम तीर्थंकर केरा । द्राविडने वारिखिल्लरे । कातीसुदि पूनमदिनसीधा । दशकोडिसुं मुनिशिल्लरे । से० ॥७॥ पांचे पांडव इणगिरसीधा । नवनारद रिषिरायरे । संव प्रजून गयाइहां मुगतें । आठेकरमखपायरे । से० ॥ ८ ॥ नेमिविना तेवीसतीर्थंकर । समोसर्या गिरिशृंगरे । अजित शांति तीर्थकरवेऊं । रह्या चोमासोरंगरे ॥ से० ॥ ९ ॥ सहससाधुपरिवार संघातें । थावच्चा सुकशाधरे । पांचसें साधुसुं सेलगमुनिवर । सेत्रुंजे सिवसुख लाधरे ॥ से० ॥ १० ॥ असंख्यातामुनि सेत्रुंजेसीधा । भरतेसरनें पाटेरे । राम अनें भरतादिक सीधा । मुक्तितणी एवाटरे ॥ से०॥ ११ ॥ जालिमयालीनें उवयाली । प्रमुख साधुनीकोडिरे । साधुअनंता सेत्रुंजेसीधा । प्रणमुं वेकरजोडिरे ॥ से० ॥ १२ ॥ ॥ ढालचौपईनी ॥ ॥ सेत्रुंजेनाकह्युं सोलउद्धार । तेसुणिज्यो सहुको सुविचार । सुणतां आणंद अंगनमाय । जनमजनमना पातिकजाय ॥१॥ ऋषभदेव अयोध्यापुरी । समवसर्या स्वामी हितकरी । भरतगयो वंदणनेंकाज । येउपदेसदियोजिनराज॥२॥जगमांहें मोटा

